# BHAGAVATPADABHYUDAYAM

BY

MAHAMAHOPADHYAYA

**Lakshmana Suri**



With a Foreword

BY

K. S. RAMASWAMI SASTRIGAL B.A, B.L.

*Sub-Judge, Tanjore.*

॥ श्रीः ॥

॥ ॐ नमः परमगुरुभ्यः ॥

# ॥ श्रीभगवत्पादाभ्युदयम् ॥

श्रीमहामहोपाध्यायलक्ष्मणसूरिविरचितम् ।



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितम् ।

१९२७.

मूल्यम्] [एकरूप्यकम्

# FOREWORD.

I feel highly honoured, nay, purified and ennobled, by the request of Mahamahopadhyaya Pandit Lakshmana Suri Avergal to write a foreword to his valuable and excellent work on Sri Sankaracharya entitled "Bhagavatpadabhyudaya." The hero of the poem is the master-mind of the world of men ; and the author of the poem is the master-poet in Sanskrit today. It would be presumptuous on my part to appraise the value of such a poem by such a poet on such a theme and on such a hero of the realm of spiritual life which is within us and about us but is only imperfectly known and would not be known at all but for the largesse of light showered by him with an abundant hand and a benignant heart.

We can never understand Sri Sankaracharya aright unless we recognise and realise that he is a universal genius as well as the summation and incarnation of the Indian spirit. He is a universal genius because he is the ideal hero as a thinker.

Before the clear and unflinching flame of his vision all darkness of unreason flies. Veil after veil of Maya is seen and shown and snatched away till at last we are face to face with the Oversoul and realise the oneness of the soul and the Oversoul. As I have observed elsewhere, "His philosophy is that dazzling integrated white light which includes and combines the component and variegated and lustrous colours of other systems of religious thought. Being inclusive and comprehensive it has no quarrel with any other religion or philosophy."

While such is the inclusive and universal character of Sri Sankara's thought, what is of even greater interest and attractiveness in our eyes is the fact that he is the summation and culmination and incarnation of the genius of India. What is the distinctiveness of the Indian spirit? It is to use the words of Rabindranath Tagore "the Realisation of the Infinite." This Realisation of the Infinite is not a mere affirmation of the intellect but is a fact of consciousness, an experience of the soul.

"That fair Beauty which no eye can see
And that sweet Music which no ear can measure"

has become an obsession with the Indian mind not

because the mind of India is forgetful of the realities of life but because the vision of God revealed in the Veda and entrusted to the safe custody of the Indian genius has become an abiding possession of the Indian spirit. रसोऽप्यस्य परं दृष्ट्वा निवर्तते. This longing for the Supreme and Infinite Being and Beauty and Bliss has never been a mere formula or a mere creed or a mere longing. It has been within us and about us. It breaks forth in our poetry and song ; it invests Nature with a newer meaning and a more radiant charm ; and it transfigures the totality of human conduct; Swami Vivekananda says: "That society is the greatest where the highest truths become practical." If the Indian peasant is to a large extent philosophical behind the plough, it is because Sri Sankaracharya and his forerunners and successors have scattered the precious truths of the Veda all over the land.

Such being the universality and the thorough Indianness of the genius of Sri Sankaracharya, we can easily realise how his life and his message are of unique value and importance to India and to the world at large. If humanity yearns to-day for a pacific and co-operative, and at the same time refined and spiritual, civilisation, it can achieve such a consummation only with the aid of Sri Sankara.

His method is not that of displacement but that of fulfilment. His message never seeks to overturn this faith or that institution, but dowers man with a new temper, a new outlook, and a new vision. It makes every one manly without ferocity, independent without loss of love, and thoughtful without sacrificing practicality. In India its value is even greater. As I have observed elsewhere: "India is today in the pangs of a new birth. In India we find a blend of many races and many religions, of many creeds and many cultures. India is the great laboratory of the future co-operative civilisation of the world. On the anvil of variety with the hammer of Advaitic unity we must forge the new co-operative harmonious spiritual civilisation of the future. The Advaita alone tolerates all levels of attainment and links them all to the vivifying and illuminating central unity. All other reconstructions are on the basis of carnivorous or cannibalistic reconstruction the reconstruction of destruction and assimilation. In the Advaita alone we find the reconstruction of combination into a higher unity, the re-integration of all the colours of the spectrum into the white light. In and through the Advaita and the Advaita alone, India will discover and realise and attain the wider and deeper and higher spiritual unity, from

which and from which alone will come the reintegrated and perfect social and industrial and political unity which will usher the dawn of a new era of peace and plenty and prosperity in India and through India's inspiration all over the world. I conceive such to be the mission of the Advaita in India and the mission of India in the world"

The poet has divided his poem into two parts—one part dealing with Sri Sankaracharya's life and the other part dealing with his thought. I think that this method has the great advantage of clarity and condensation and that in this respect the poem has an advantage over the older lives of the Great Teacher. As the book now published deals only with the life of Sri Sankara it will be out of place for me to enter into the details of his thought and so I refrain from going into the intricacies of the doctrine of the Advaita.

It may be asked what need there is for a new poem on Sri Sankara when the land abounds in his biographies which, however, are largely diluted by what Max Muller calls the dialogic process. Each age must make its own summation of the past both as a measure of gratitude and as a means of inspiration. The beauty and excellence of such a work are its own justification. The present poem

has such abiding beauty and such varied excellence as surely form its secure basis of self-justification. The verse has a clear and smooth and harmonious flow and the poem has a depth of meaning commensurate with the limpidity and lucidity of the verse. I am sure that the public will appreciate the poem and that the book will be read on the Sankara Jayanti day year after year. I am sure also that the author will give us soon the second part of the poem and also other works summing up the past and guiding the present and ushering in the great future that is to be, because in the case of a mind like his which is so full of the auspicious music of the pure and perfect life and so dedicated to the acquisition and dissemination of the elements of uplift and salvation, every achievement will lead to a greater achievement and every auspicious act is a herald of further auspicious acts to come. To use his own words in this poem

लोकेऽपि भावि कल्याणं संपन्नं दैवसंपदा ।
भद्राण्यभिद्रवन्त्याशु निम्नमाप इव स्थलम् ॥

Tanjore
27th April 1927 — K. S. RAMASWAMI SASTRI.



॥ श्रीगुरुभ्यो नमः ॥

# ॥ उपोद्घातः ॥



श्रीकैलासे महाशैले महीयसि महीयसाम् ।
शुद्धसत्त्वैकगम्यत्वद्योतके रजतात्मनि ॥ १ ॥

अभूरितपसां पुंसां मनसापि दुरासदे ।
सकृच्छ्रवणमात्रेण सर्वपापप्रणाशिनि ॥ २ ॥

महामणिमयस्तम्भसहस्रार्चिविराजिते ।
सुमेरुशिखरस्पर्धिनानाप्राकारसंवृते ॥ ३

सर्वाश्चर्यमये तत्र विशाले मणिमण्टपे
मूले कल्पतरोर्दिव्यमोंकारमयमासनम् ॥ ४ ॥

अध्यासीनं महादेवमुमयोंकाररूपया ।
अन्वास्यमानं पुत्राभ्यां गणेशेन गुहेन च ॥ ५ ॥

प्रह्वेनाधिष्ठितद्वारं नन्दिना वेत्रपाणिना ।
प्रतीक्ष्यमाणसमयं सेवार्थं भक्तकोटिभिः ॥ ६ ॥

उपासांचक्रिरे देवा ब्रह्मविष्णुपुरोगमाः ।
देवर्षयो नारदाद्याः सनकाद्याश्च योगिनः ॥ ७ ॥

एवं निषेव्यमाणोऽयं सर्वज्ञः परमेश्वरः ।
जानन्नपि स पप्रच्छ नारदं विनयान्वितम् ॥ ८ ॥

विवक्षुरिव भासि त्वं देवर्षे ब्रूहि हृद्गतम् ।
अपि स्वस्त्यद्य लोकानां त्वं वायुरिव सर्वगः ॥ ९ ॥

इति पृच्छति देवेशे संप्राप्तावसराः सुराः ।
नारदं चोदयामासुर्ब्रूहि कार्यमितीङ्गितैः ॥ १० ॥

तस्मै निवेदयामास स च नत्वा कृताञ्जलिः ।
अन्तश्चरसि भूतानां त्वं सर्वज्ञश्च सर्ववित् ॥ ११ ॥

त्वदनुग्रहलेशेन भ्राजन्ते ज्ञानिनोऽपरे ।
किं नामाविदितं तेऽद्य जनेनानेन बोध्यताम् ॥ १२ ॥

तथाप्याज्ञा गुरुतरा प्रभोरिति निवेद्यते ।
यः प्रणीतस्त्वया पूर्वं सर्वभूतानुकम्पिना ॥ १३ ॥

धर्मार्थकाममोक्षाख्यपुरुषार्थैकसाधनम् ।
येन लोकाश्च देवाश्च पितरश्च प्रतिष्ठिताः ॥ १४ ॥

अनुतिष्ठन्ति यद्धर्मं धर्मज्ञा ये बुभूषवः ।
स निःश्वसितभूतस्ते वेदो निःश्वासवत्प्रियः ॥ १५ ॥

पृथिव्यामधुना पापैः पीड्यते हन्त सर्वशः ।
न कोऽपि मन्यते तस्य नित्यत्वं न्यायसाधितम् ॥१६॥

प्रतियन्ति न तद्धर्मं प्रत्यक्षशरणाः खलाः ।
अप्रत्यक्षफले वेदे को विश्वसितुमर्हति ॥ १७ ॥

ये मन्दा मन्दमतयः पशुप्राया नराधमाः ।
तेषां श्रद्धास्तु निगमे नास्माकं धीमतामिति ॥ १८ ॥

प्रहसन्तः स्वगोष्ठीषु विरलानपि वैदिकान् ।
आहुश्च ते सर्वे धर्मो यः प्रत्यक्षफलोदयः ॥ १९ ॥

इत्यादिवादकुशलैर्वञ्चिताः कलिपूरुषैः ।
जहुर्हीना इवाकार्याद्धर्मं शेषा अपि क्रमात् ॥ २० ॥

केचिच्छ्रुतिविरुद्धेषु तन्त्रेषु प्रवणा अपि ।
कल्पयन्ति हठात्स्वैरमैकार्थ्यं श्रुतितन्त्रयोः ॥ २१ ॥

यत्प्रणीतं भगवता व्यासरूपेण विष्णुना ।
शास्त्रं शारीरकं नाम मुमुक्षूणां परायणम् ॥ २२ ॥

तद्दशामद्य किं वक्ष्ये प्रजापतिवचो यथा ।
विरोचनेनान्यथैव गृहीतं चोपपादितम् ॥ २३ ॥

तथेदं पारमर्षं च ब्रह्मात्मैकत्वदर्शनम् ।
गृहीतं वैपरीत्येन विरुद्धं च परस्परम् ॥ २४ ॥

तदेव चानुधावन्ति परप्रत्ययिनो जडाः ।
किमद्य बहुना पृथ्व्यां जागर्त्यासुरदर्शनम् ॥ २५ ॥

प्रजापतेरिव मुनेः प्रयासो विफलीकृतः ।
आक्रान्ता च मही कृत्स्ना निर्भरं सौगतादिभिः ॥ २६ ॥

तत्प्रसीद यथा धर्मो भुवि स्यान्निरुपप्लवः ।
यथा च मार्गगा मर्त्याः स्वाधिकारानुरूपतः ॥ २७ ॥

सेवमानाः स्वस्वधर्मं कल्पेरन्श्रेयसे क्रमात् ।
यथा च नास्तिको नश्येद्वास्तिकत्वं भजेत वा ॥ २८ ॥

तथाविधमुपायं नस्त्वमेवाख्यातुमर्हसि ।
इत्युक्तवन्तं देवर्षिं भगवानाह सस्मितम् ॥ २९ ॥

तपस्यतः शिवगुरोरहमेवात्मजो भवन् ।
कालेनाल्पेन सद्धर्मं स्थापयामि महीतले ॥ ३० ॥

सर्वतन्त्रस्वतन्त्रो यो मण्डनो भ्रातुरंशजः ।
वादच्छलेन तं शिष्यं करिष्यामि सुदुर्जयम् ॥ ३१ ॥

अवश्यमेव जेतव्यः कर्मपारम्यवाद्यसौ ।
अजितेऽस्मिञ्श्रुतेर्ब्रह्मपरत्वं स्यान्नु कम्पितम् ॥ ३२ ॥

अवैदिकान्विनेष्यामि खेलेनैव तदुक्तिभिः ।
चित्तकाण्डत्रयीधर्मं यथावत्सुप्रतिष्ठितम् ॥ ३३ ॥

इत्युक्त्वान्तर्हिते देवे विष्णुराह दिवौकसः ।
भुव्यहं पद्मपादः सन्नुपसत्स्यामि शंकरम् ॥ ३४ ॥

प्राभाकरिः सन्नंशेन हस्तामलकतां व्रजन् ।
वायुरेष गिरिर्भूत्वा यातु तोटकतामपि ॥ ३५ ॥

मण्डनः शिष्यतां प्राप्य प्रणेष्यति हि वार्तिकम् ।
सुरेश्वराचार्य इति ख्यातिमेष्यति च स्वयम् ॥ ३६ ॥

साह्यं सर्वात्मना कार्यमिहास्माभिरतन्द्रितैः ।
इत्यादिष्टाः सुरगणास्तथेत्युक्त्वा ययुर्मुदा ॥ ३७ ॥

ओं तत्सत् ॥





॥ ॐ नमः परमगुरुभ्यः ॥

# ॥ श्रीभगवत्पादाभ्युदयम् ॥

नमः परमहंसेन्द्रपरिव्राजकमूर्तये ।
गुरवे सर्वजगतां महिम्ने शंकरात्मने ॥ १ ॥

अतिगम्भीरवाग्गुम्फैः पूर्वाचार्यैरनेकधा ।
वर्णितं परमाचार्यवैभवं परमाद्भुतम् ॥ २ ॥

तदहं न स्तुवन्नत्र जिह्रेमि मितवागपि ।
भक्त्यैव प्रीयते देवो न पाण्डित्यादिभिस्तथा ॥ ३ ॥

न च तार्क्ष्यपथे व्योम्नि न यान्ति चटकादयः ।
शक्त्या वर्ण्या ह्यतो वाचां शुद्धये महतां गुणाः ॥ ४ ॥

इति बुद्ध्या प्रवृत्तस्य स्तोतुं श्रीगुरुवैभवम ।
क्षन्तुमर्हन्ति सुधियो ममेदमतिसाहसम् ॥ ५ ॥

अस्ति श्रीमान्केरलाख्यः स्फीतो जनपदो महान् ।
पारावारौ समाश्लिष्यन्नुभौ दक्षिणपश्चिमौ ॥ ६ ॥

यत्र न प्रभवत्युग्रस्तापश्छायाद्रुमैर्घने ।
तत्त्वज्ञानामृतास्वादतृप्तेष्विव भवोद्भवः ॥ ७ ॥

न यत्र समशीतोष्णे व्यथा वा जाड्यसंभवा ।
यथा तितिक्षासारेषु महत्सु द्वन्द्वकारिता ॥ ८ ॥

निकामवर्षिणा यत्र पर्जन्येनावसीयते ।
क्रतुमुख्यैरिहाजस्रमिज्यन्ते देवता इति ॥ ९ ॥

यः सदा ब्रह्मघोषेण मुखरीकृतदिङ्मुखैः ।
विभाति श्रोत्रियग्रामैर्ब्रह्मलोक इवापरः ॥ १० ॥

सवनेषु निखातानां यूपानां यत्र पङ्क्तयः ।
स्वर्गसोपानपङ्क्तीनां श्रियं पुष्णन्ति यज्वनाम् ॥ ११ ॥

[1]पूर्णा नाम नदी तत्र प्रसन्नामृतवाहिनी ।
आप्याययति विद्येव सर्वान् विषयगोचरान् ॥ १२ ॥

तस्यास्तटे विभात्युच्चैर्वृषभो नाम सानुमान् ।
श्रीकैलासादपि प्रेष्ठं कुरुते यं वृषध्वजः ॥ १३ ॥

भूधरस्यास्य निकटे भूसुरैरभिभासुरः ।
ग्रामोऽस्ति सुकृतग्रामः पृथिव्या इव मूर्तिमान् ॥ १४ ॥

---

1. चूर्णी नदीति चिद्विलासीये ।

जन्तोर्यदाश्रितात्कालष्टीकृते भयविह्वलः ।
इति हेतोर्वदन्त्येनं [1]कालटीति विचक्षणाः ॥ १५ ॥

तत्र कश्चिद्द्विजवरश्चतुर्वेदविदग्रणीः ।
जज्ञे विद्याधरो नाम तपसा पावकप्रभः ॥ १६ ॥

तस्माच्छिवगुरुर्नाम जातो शिवगुरुर्हि मः ।
सर्वज्ञत्वाच्छिव इव गुरुत्वाद्योगिनामपि ॥ १७ ॥

सोऽधीत्य साङ्गानाम्नायान्सरहस्यान्यथाविधि ।
समावृत्तो गुरुकुलान्मखिपण्डितनन्दिनीम् ॥ १८ ॥

कुलशीलादिसंपन्नामात्मनः सदृशीं द्विजः ।
उपयेमे यथान्यायं सतीं नाम सतीमणिम् ॥ १९ ॥

आर्येत्यम्बेति चाहुर्यामुमावत्सर्वमङ्गलाम् ।
सुशीलया तया नित्यं छाययेवानुयातया ॥ २० ॥

यथाशयं यथाकालमुपस्थानेषु दक्षया ।
स धर्मानाचरन्मेने गृहाश्रममनुत्तमम् ॥ २१ ॥

---

1. यत्तु चिदम्बरक्षेत्रे सर्वज्ञनाम्नो विप्रस्य पत्न्यां कामाक्ष्यां श्रीभगवत्पादावतार इत्यनन्तानन्दगिरिकृते शंकरविजये, तद्बहुग्रन्थविरोधात्प्रत्यक्षविरोधाच्चोपेक्ष्यम् ।

तस्यैवं वर्तमानस्य धर्मनित्यस्य धीमतः ।
जगाम सुमहान्कालः प्रजातन्तुमनिन्दतः ॥ २२ ॥

जरया स्मारितः पश्चाज्जायया चानुबोधितः ।
संतानार्थी तपस्तेपे सभार्यः स वृषाचले ॥ २३ ॥

नद्यां त्रिषवणस्नायी भस्मरुद्राक्षभूषितः ।
जपन्पञ्चाक्षरमनुं रुद्राध्यायपरायणः ॥ २४ ॥

सकृद्बिल्वोदकं प्राश्नन्दध्यौ देवमहर्निशम् ।
एवं तपस्यतस्तस्य महान्कालोऽत्यवर्तत ॥ २५ ॥

[2]अथ प्रसन्नो भगवान्भक्तकामितकामधुक् ।
आरुह्य वृषभं दिव्यं रजताचलसंनिभम् ॥ २६ ॥

देव्यालंकृतवामाङ्कः प्रादुरासीन्महेश्वरः ।
कोटिसूर्यप्रतीकाशमनाद्यन्तं सदाशिवम् ॥ २७ ॥

प्रसादसुमुखं देवं मनोवाचामगोचरम् ।
प्रणम्य शिरसा योगी तुष्टाव कृतसंभ्रमः ॥ २८ ॥

तमाह शंभुर्वत्स त्वं श्रान्तोऽसि तपसा भृशम् ।
जाने मनोगतं तेऽङ्ग मत्तः पुत्रमभीप्सयसि ॥ २९ ॥

---

2. स्वप्न एव महेश्वरदर्शनमिति चिद्विलासीये ।

किं सुतोऽल्पायुरेकोऽस्तु सर्वज्ञो लोकपूजितः ।
उत दीर्घायुषो मन्दा बहवस्ते मतं वद ॥ १० ॥

इति पृच्छति देवेशे प्राह भूयः प्रणम्य सः ।
वरं क्षणं क्षणरुचिर्नोल्कामुखशतं चिरम् ॥ ११ ॥

तद्भवानिव सर्वज्ञोऽस्त्वल्पायुरपि मे सुतः ।
प्रहस्य देवोऽप्यस्त्वेवमित्युक्त्वान्तरधीयत ॥ १२ ॥

एवं लब्ध्वा वरं तुष्टौ समाप्य नियमं ततः ।
दम्पती गृहमागत्य प्रतीतौ सुखमूषतुः ॥ १३ ॥

अपश्यन्नथ सर्वज्ञमात्मनोऽन्यं जगत्त्रये ।
वरदानं च देवेभ्यः संस्मरन् करुणानिधिः ॥ १४ ॥

आविवेश सतीं गर्भं शंकरो लोकशंकरः ।
अन्तर्वत्नीमथ ज्ञात्वा पत्नीं शिवगुरुर्मुदा ॥ १५ ॥

गर्भसंस्कारकर्माणि चक्रे शास्त्रेण शास्त्रवित् ।
वर्धमाने ततो गर्भे गर्भा वेदद्विषां गृहे ॥ १६ ॥

अकस्मात्प्रच्यवन्ती स्म क्षीणपुण्या यथा दिवः ।
गृहेषु सौगतादीनामद्वैतद्वेषिणामपि ॥ १७ ॥

फेरवा दुःश्रवारावा रोरूयन्ते स्म सहस्रशः ।
ये धर्मप्रवणा नित्यं ये च वेदान्तशालिनः ॥ १८ ॥

प्रसेदुराशयास्तेषां शरदीव जलाशयाः ।
गर्भालसाऽपि सा नासीत्स्वधर्मेष्वलसा मनाक् ॥ ३९ ॥

श्लथादरा तु भोगेषु शनैर्मिथ्या त्वबोधतः ।
मेने स्वप्नोपमं सर्वं यत्किंचिद्व्यावहारिकम् ॥ ४० ॥

जहौ च क्रमशस्तृष्णामैहिकामुष्मिकार्थयोः ।
सा ददर्श मुहुः स्वप्ने वटमूलनिवासिनम् ॥ ४१ ॥

शुद्धस्फटिकसंकाशं त्रिनेत्रं चन्द्रशेखरम् ।
चिन्मुद्रालक्षणं देवं युवानं स्मरसुन्दरम ॥ ४२ ॥

दधानं मौक्तिकीमक्षमालां शिष्यैः समावृतम् ।
ततः प्रबुद्धा सा देवी तमेव स्वप्नगोचरम् ॥ ४३ ॥

ध्यायन्ती मनसा देवं तन्मयीं धारणां दधौ ।
अथ चानेहसाऽल्पेन यत्किंचित्सचराचरम् ॥ ४४ ॥

अचष्ट तच्छिवाकारं योगारूढेन चेतसा ।
व्यावहारिकं यत्सत्यं यत्सत्यं पारमार्थिकम ॥ ४५ ॥

यत्प्रातिभासिकं सत्यं तत्सर्वं नेतरच्छिवात् ।
शिवः कर्ता शिवो भोक्ता शिवो भोग्यं शिवोऽमृतम् ॥

शिवोऽगतिर्गतिश्चेति प्रतीता निर्वृतावसत् ।
गर्भवासिनि देवेशे सत्यसंकल्प ईश्वरे ॥ ४७ ॥

मुदा परमया युक्ता देवाः साकं महर्षिभिः ।
प्रणम्य प्रार्थयामासुर्गर्भस्थं परमेश्वरम् ॥ ४८ ॥

देवदेव जगन्नाथ करुणाकर शंकर ।
जय देव महादेव जय भक्तार्तिभञ्जन ॥ ४९ ॥

जय मृत्युंजय जय जयान्धकरिपो जय ।
जय त्रिपुरसंहारिन् जय हालाहलाशन ॥ ५० ॥

सन्त्येव बहवो नाथाः सुखस्थानां जगत्त्रये ।
न कोऽपि त्वदृते शम्भो विपन्नस्याभयप्रदः ॥ ५१ ॥

तथा ह्यस्मान् कालकूटपुरैर्दैत्याद्युपप्लुतान् ।
कस्त्वां विनाऽन्यः सहसा मा भैष्टेत्यभ्यपालयत् ॥ ५२ ॥

अतो हि त्वामामनन्ति विश्वाधिक इति प्रभो ।
योऽयं वेदपथः पुंसां श्रेयसे निर्मितस्त्वया ॥ ५३ ॥

स बलाल्लुप्यते दुष्टैरधुना हेतुवादिभिः ।
यावद्भुवि स्थितो धर्मस्तावदस्मत्स्थितिर्दिवि ॥ ५४ ॥

यावदस्मत्स्थितिस्तावज्जगच्चक्रं प्रवर्तते ।
तत्पृथ्व्यां वैदिकं धर्मं प्रतिष्ठाप्य यथापुरम् ॥ ५५ ॥

धर्ममूलं जगत्सर्वं परिपालय शंकर ।
यथा वृषो गामुपैति चतुष्पाद्वृषवाहन ॥ ५६ ॥

तथा कुरुष्व देवेति प्रार्थ्य देवा दिवंययुः ।
अथ कालस्तु संप्राप्तो जगदानन्ददायकः ॥ ५७ ॥

रामनाम्नो हि यो विष्णोर्महीमवतितीर्षतः ।
स एव समयः सर्वो भिन्नेते तिथिभे परम् ॥

[1]मधुमासे सिते पक्षे उच्चस्थे ग्रहपञ्चके ।
नक्षत्रे रुद्रदेवत्ये रुद्रांशत्वावबोधके ॥

पूर्णात्मज्ञानपिशुने पूर्णाख्ये पञ्चमीतिथौ ।
त्र्य्यात्मन्युश्चमारूढे त्रयीमूर्तित्वलक्षके ॥ ६० ॥

जगद्गुरुत्वं वदतोर्गुर्वोरुच्चमुपेयुषोः ।
मन्दारयोश्चोच्छ्रितयोः श्रितमन्दारतेरिणोः ॥ ६१ ॥

---

1. "निधिनागेभवह्न्यब्दे विभवे मासि माधवे । आर्द्रायां शुक्लपञ्चम्यां शंकरस्योदयः स्मृतः ॥" इति माधवमासे भगवत्पादावतारस्योक्तत्वात्, कथमिह "मधुमासे" इत्युक्तिर्न विरुद्धेति चेत्, चान्द्रमानरीत्या माधवत्वेऽपि तदा भानोर्मेषराशिस्थितत्वेन मधुत्वमपि न विरुध्यते ॥

Vide also Encyclopædia Britannica 11th Edn. Vol. 24, P. 151; Vol. 13, P. 506, under 'Hinduism': Vol. 24, P. 174 under 'Sanskrit poetry': Vol. 14, P. 397 under 'India—Hindu period.' Vide also 'Decline of Buddhism.' It is seen from the above that Sri Sankaracharya flourished about 789 A. D. to 820 A. D.

एवं महामहिमनि समये शोभनोदये ।
सा देवी सुषुवे पुत्रं कुमारसमतेजसम् ॥ ६२ ॥

संसारतापतप्तानां पीयूषसलिलाशयम् ।
हंसं श्रुत्यन्तपद्मानां ज्ञानवैराग्यविग्रहम् ॥ ६३ ॥

द्वादशात्मानमज्ञानतिमिरध्वस्तचक्षुषाम् ।
श्रेष्ठं परमहंसानां गुरूणां परमं गुरुम् ॥ ६४ ॥

तेन सा शुशुभे देवी कुमारेणार्कवर्चसा ।
तत्त्वमर्थैक्यबोधेन यथा भगवती श्रुतिः ॥ ६५ ॥

जयशब्दो नमःशब्दः स्वस्तिशब्दश्च खेऽजनि ।
दिव्यदुन्दुभिघोषश्च रोदसी प्रतिनादयन् ॥ ६६ ॥

आविर्भूते जगन्नाथे शंकरे लोकशंकरे ।
सर्वमेव जगत्सद्यस्तमोमुक्तमिवाबभौ ॥ ६७ ॥

शिवप्रसादजं पुत्रं लब्ध्वा शिवगुरुर्मुदा ।
नात्मानमपि सस्मार ब्रह्मानन्दगतो यथा ॥ ६८ ॥

स विप्रैर्विधिवत्कुर्वन् जातकर्मादिकं पिता ।
ददर्श सूनोरङ्गानि हर्षविस्फारितेक्षणः ॥ ६९ ॥

तत्र चन्द्रकलाचिह्नं लक्षयामास मूर्धनि ।
तथाऽक्षिलक्ष्म भ्रूमध्ये शूललक्षणमंसयोः ॥ ७० ॥

नागयज्ञोपवीताङ्कमुरसि स्फुटमैक्षत ।
शुद्धस्फटिकसंकाशं विग्रहं चातिभासुरम् ॥ ७१ ॥

चक्रध्वजादिरेखाढ्यं पाणिपादं च वीक्ष्य सः ।
मेने स्वयं प्रसन्नो मे सकृत्प्रणत सर्वदः ॥ ७२ ॥

भगवाञ्शंकरः साक्षात्पुत्रत्वं प्रत्यपद्यत ।
इति निश्चित्य पुत्रं स नाम्ना शंकरमभ्यधात् ॥ ७३ ॥

क्लेशादि दूरतर ईश्वर ईश्वराणां
य: सर्वकारणमजः स्वयमित्यजस्रम् ।
जोघुष्यमाणमहिमा निगमैः स बालो
भूत्वा द्विजस्य ववृधे जगतां विभूत्यै ॥ ७४ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
**श्रीभगवत्पादाभ्युदये अवतारवर्णनं नाम**
**प्रथमः सर्गः ॥**



## द्वितीयः सर्गः ॥



सा ददर्श सुतं माता दिव्यमङ्गलविग्रहम् ।
सिंहसंहननं सिंहस्कन्धं सिंहावलोकनम् ॥ १ ॥

उद्यन्तमिव भास्वन्तं नृसिंहमिव तेजसा ।
सुधांशुमिव पीयूषं वर्षन्तमिव चक्षुषि ॥ २ ॥

चक्षुष्मद्भाग्यनिष्पत्तिमिवासेचनकाकृतिम् ।
वितरन्तमिवार्तेभ्यो जनेभ्योऽभयदक्षिणाम् ॥ ३ ॥

तारयन्तमिवोद्धृत्य जनतां जनिसागरात् ।
सुभगं च गभीरं च तं दृष्ट्वा हर्षिताभवत् ॥ ४ ॥

प्रेक्षणीयतमं सूनोरङ्गप्रत्यङ्गसौष्ठवम् ।
प्रेक्षावतामपि प्रेक्षावहमुत्प्रेक्षते स्म सा ॥ ५ ॥

अत्यन्तव्यापिनी सौम्ये विशाले चास्य चक्षुषी ।
अत्यन्तव्यापि चक्षुष्ट्वं व्याचक्षाते निरङ्कुशम् ॥ ६ ॥

प्रवृत्त्या च निवृत्त्या च द्विधा स्वं व्यक्तुमात्मनः ।
अतिरेव नु संवृत्ता शोभने श्रवसी इमे ॥ ७ ॥

अधरोष्ठमिदं वल्गु सुश्लिष्टं च निदर्शनम् ।
भविता तत्त्वमस्यैक्ये महावाक्योपपादिते ॥ ८ ॥

नासाद्वयमिदं चारु वीक्ष्य स्मरति मे मनः ।
भगवद्वचसः शुक्लकृष्णाख्यसृतिदर्शिनः ॥ ९ ॥

इमौ विद्याविलासिन्या विलासमणिदर्पणौ ।
कपोलदर्पणौ वेति नाध्यवस्यति मे मतिः ॥ १० ॥

रेखाश्चतस्रोऽङ्गुष्ठस्य मूले वीक्ष्याह सा पतिम् ।
नाथ त्वदात्मजोऽप्येष सर्ववेदो भवानिव ॥ ११ ॥

एवमुत्पश्यति स्मान्यदप्यङ्गं ब्रह्मवादिनी ।
यथाप्रकृति लोके हि वस्तु तत्त्वमुदीक्ष्यते ॥ १२ ॥

चरत्यस्मिन् सजानुभ्यां पाणिभ्यां भवनाङ्गणे ।
तपःसत्यदयाशौचान्यचरन् भुवनाङ्गणे ॥ १३ ॥

चत्वारो राजदन्ताश्च यदोद्बिभिदिरे शिशोः ।
वृष्ट्येव बीजमुद्भिन्नं चातुर्वर्ण्यं समं तदा ॥ १४ ॥

यर्ह्येष प्रथमां वाचं व्याजहार शुभाक्षराम् ।
तर्हि श्रद्दधिरे विप्रा मन्त्रे व्याहृतिपूर्वके ॥ १५ ॥

तस्मिन् प्रस्थातुमनसि पादाभ्यां मुनिदारके ।
श्रुतिस्मृत्युदितौ धर्मौ जगत्यां सुप्रतिष्ठितौ ॥ १६ ॥

अब्दपूर्तिमहे प्राप्ते सुताभ्युदयकृत्पिता ।
वृषाचलेशमानर्च पूजाद्रव्यैर्विशेषतः ॥ १७ ॥

यदर्पितं तत्र लिङ्गे भूषामाल्याम्बरादिकम् ।
तत्सर्वं स्वसुताङ्गस्थं सद्यो वीक्ष्य सविस्मितः ॥ १८ ॥

महोत्सवे रथस्थं तौ दम्पती दर्शकौ हरम् ।
आगतौ स्वमुमाङ्के च स्वाङ्के चापश्यतां सुतम् ॥ १९ ॥

जातु वात्याऽऽकुले ग्रामे त्वपश्यन्तस्तमर्भकम् ।
तत्र तत्र विचिन्वन्तो जनाः संभ्रान्तमानसाः ॥ २० ॥

दिष्ट्या लब्धोऽयमित्युक्त्वा तमेवैकं पृथक्पृथक् ।
युगपद्गृहमानिन्युस्तानष्टौ वीक्ष्य विस्मिताः ॥ २१ ॥

पिताऽप्यन्विष्य जग्राह तमेकं हारिसंनिधेः ।
पित्राऽऽनीतेऽर्भके दृष्टे नादृश्यन्तेतरार्भकाः ॥ २२ ॥

एवंविधाभिर्लीलाभिर्दिव्याभिर्दिव्यमात्मनः ।
द्योतयन्नैश्वरं भावं विजहार स बालवत् ॥ २३ ॥

पितुरङ्कगतो नित्यं स्तोत्राणि स महात्मनाम् ।
कीर्त्यमानान्युषत्काले शृण्वन्ननुजगौ स्वयम् ॥ २४ ॥

अग्निहोत्रादिकालेषु गुरोः संनिहितोऽन्तिके ।
सर्वं यथावद्बुबुधे मन्त्रतन्त्रक्रियादिकम् ॥ २५ ॥

स पूजावसरे कृत्वा यत्किंचित्प्रतिमादिकम् ।
स्वयं चार्चति पार्श्वस्थो भक्तिप्रणिहितेन्द्रियः ॥ २६ ॥

एवंविधानि कर्माणि प्रत्यहं तस्य पश्यताम् ।
बालानां वासना सैव जाता न क्रीडिते मनाक् ॥ २७ ॥

शुभोऽशुभो वा संसर्गात्स्वभावोऽपि विवर्तते ।
पुष्पादिद्रव्यसंसर्गादबादीनां यथा गुणाः ॥ २८ ॥

श्रूयते शुकशावौ द्वावेकयोनिभवौ यमौ ।
विप्रव्याधालयावासात्तत्तद्युक्त्यगिराविति ॥ २९ ॥

नूनं ते बालकाश्चीर्णपुण्यपुञ्जा हि जन्मसु ।
अन्यथा क नु वेदान्तवेद्यः शंभुः क चार्भकाः ॥ ३० ॥

इतिहासपुराणानि सकृच्छ्रुत्वोपपत्तिभिः ।
वयस्यांश्चोदयन् धर्मे तेषामाचार्यतां गतः ॥ ३१ ॥

स्मरन्ति विद्वान् बालोऽपि वृद्धः शेषास्तु बालकाः ।
विद्यैव वार्धके हेतुर्हायनाद्यप्रयोजकम् ॥ ३२ ॥

किं बहूक्त्याऽऽतृतीयाब्दाज्जग्राह निखिलाः कलाः ।
स रुद्धोऽनुपनीतत्वादाम्नाये न त्वशक्तितः ॥ ३३ ॥

नैतच्चित्रं महेशाने लीलामनुजविग्रहे ।
सकृच्छ्रवणमात्रेण यत्सर्वं चाध्यगीष्ट सः ॥

शिष्टाचारानुरोधार्थं विभूतिं ख्यापयन्विभुः ।
शुश्राव शिष्यवत्साक्षी तत्रास्ते यदुपुंगवः ॥ ३५ ॥

कदाऽयं पञ्चवर्षः स्यादुपनीतः कदा भवेत् ।
कदा वेदध्वनिं वत्समुखाच्छ्रोष्यामि निर्भरम् ॥ ३६ ॥

ध्यायन्नेवं शिवगुरुरनवाप्तमनोरथः ।
कालेन चण्डवेगेन हा निन्ये कीर्तिशेषताम् ॥ ३७ ॥

शिवलोकं गतं दृष्ट्वा पतिं सा शोकमुत्थितम् ।
निजग्राह विवेकेन शिशोः खेदापनुत्तये ॥ ३८ ॥

क्रियां निवर्तयामास यथाविध्यौर्ध्वदेहिकीम् ।
आहिताग्निविधानेन सती भर्तुः सबान्धवा ॥ ३९ ॥

[1]अथ संवत्सरे याते प्राप्ते वर्षे च पञ्चमे ।
सुतस्य कारयामास मातोपनयनक्रियाम् ॥ ४० ॥

उपनीतो गुरुकुले विद्यार्थी शंकरो वसन् ।
जग्राह वेदानाचार्याच्चतुर्वेदविदां वरात् ॥ ४१ ॥

अधो यन्नयमध्यायानुपाध्यायैरितान् सकृत् ।
जग्राह न ददौ चास्य पुनरुच्चारणश्रमम् ॥ ४२ ॥

---

[1]चिद्विलासीये तु शिवगुरुरेव पञ्चमेऽब्दे स्वपुत्रं शंकरमुपनीय स्वयमेव वेदानध्यापयामास ततः कालधर्मेणायुज्यतेति ।

स ब्रह्मचारिणः पूर्वं येऽस्यासंस्तत्र ते क्रमात् ।
अस्यैव शिष्यतां प्राप्ताः संदेशाद्देशिकस्य तु ॥ ४३ ॥

तथेत्यध्यापनक्लेशं गुरोः परिहरन्सुधीः ।
स्वयमध्यापयामास तान्सर्वान्गुरुसंनिधौ ॥ ४४ ॥

वेदेष्वनर्गलं तस्य सौस्वर्यं च सुशब्दताम् ।
परिपाटीं च निर्बाधां पश्यन्प्रमुमुदे गुरुः ॥ ४५ ॥

अथाह्नोभिः कतिपयैर्वेदानां पारदृश्वनः ।
मेधां च प्रतिभां चास्य निरीक्ष्याचिन्तयद्गुरुः ॥ ४६ ॥

अहो अन्यादृशं ह्यस्य बालस्य मतिवैभवम् ।
यदेष सर्ववेदानामीशोऽभूत्प्रमितैर्दिनैः ॥ ४७ ॥

अपारांश्चातिगम्भीरानाम्नायान्सागरानिव ।
पिबन्खेलेन नन्वेष द्वितीयः कुम्भसंभवः ॥ ४८ ॥

नायं संसृतिभाक्कश्चिज्जीवो भवितुमर्हति ।
नूनमीशान एवैवं स्वैरं विहरति प्रभुः ॥ ४९ ॥

अहो स्वधीतं मेऽधीतं जन्म चैव सुजन्म मे ।
यदहं लोकनाथस्य गुरुत्वं सुकृतैर्गतः ॥ ५० ॥

इति निश्चित्य मनसा शंकरं शंकरात्मकम् ।
अनिशं भावयन्नास्त तच्चेष्टासु चमत्कृतीः ॥ ५१ ॥

तस्य मेधाविनः कीर्तिः शोभयन्ती दिशो दश ।
हन्त कार्ष्ण्यं मुखाब्जेषु दध्रे पण्डितमानिनाम् ॥ ५२ ॥

कदाचिदेष मध्याह्ने कस्यचिद्गृहिणो गृहम् ।
प्रविश्य भवती भिक्षां देहीत्यग्रमभिक्षत ॥ ५३ ॥

श्रुत्वा तद्गृहिणी सद्यः प्रम्लानवदनाम्बुजा ।
मुञ्चन्त्यश्रूणि नेत्राभ्यां निःश्वसन्ती मुहुर्मुहुः ॥ ५४ ॥

लज्जयावाङ्मुखी प्राह मन्दमन्दस्वरा वटुम् ।
[1]भिक्षां प्राहुर्ग्रासमात्रं तां दातुं ब्रह्मचारिणे ॥ ५५ ॥

यथा कालमुपस्थात्रे या न शक्ता कुटुम्बिनी ।
धिग्धिक्तज्जन्म दुर्जाता का नु स्यान्मादृशी भुवि ॥ ५६ ॥

नूनं मया प्रागर्हद्भ्यो न किंचित्प्रतिपादितम् ।
देहीति याचते नास्तीत्युक्ता वागतिनिष्ठुरा ॥ ५७ ॥

तदिदानीं मया प्राप्तं दौर्गत्यमतिदारुणम् ।
कृतं यदिह सर्वोऽपि तदेव प्रेत्य चाश्नुते ॥ ५८ ॥

अथाप्यामलकं तेऽद्य भिक्षार्थमिदमिष्यताम् ।
यथाशक्त्यर्थिने यच्छन्नापराध्यति वै जनः ॥ ५९ ॥

---

1. "ग्रासमात्रं भवेद्भिक्षा अग्र्यं भिक्षाचतुष्टयम् । अग्र्यं चतुर्गुणीकृत्य हन्तकारोऽभिधीयते ॥" इति स्मृतिः ।

इत्युक्त्वा सा महाभागा प्रदायामलकीफलम् ।
अनेन प्रीयतां शंभुरिति चाह विलज्जिता ॥ ६० ॥

निध्याय तस्याः कार्पण्यं सौमनस्यं च शंकरः ।
तुष्टाव लक्ष्मीं तद्भूत्यै कारुण्यरसमेदुरः ॥ ६१ ॥

---

## ॥ कनकलक्ष्मीस्तवः ॥

"अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गलदेवतायाः ॥ १ ॥

मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि ।
माला दृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसंभवायाः ॥ २ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्द-
मानन्दमन्दमनिमेषमनङ्गतन्त्रम् ।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ३ ॥

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या
हारावली च हरिनीलमणी विभाति ।
कामप्रदा भगवतोऽपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ॥ ४ ॥

स्तुतिं तामतिगम्भीरामाकर्ण्य हृदयंगमाम् ।
बालके कृतवात्सल्या प्रादुरासीत्स्वयं रमा ॥ ६२ ॥

स्वभासा भासमानां तामिन्दिरां वीक्ष्य शंकरः ।
भक्तिप्रवणधीर्नीचैः प्रणनाम पुनः पुनः ॥ ६३ ॥

---

कालाम्बुदालि ललितोरसि कैटभारे-
धोराधरे स्फुरति या तटिदङ्गनेव ।
मातुः समस्तजगतां महनीयमक्षि
भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ५ ॥

प्राप्तं पदं प्रथमतः खलु यत्प्रभावा-
न्माङ्गल्यभाजि मधुमाथिनि मन्मथेन ।
मय्यापतेत्तदिह मन्थरमीक्षणार्धं
मन्दालसाक्षि मकराकरकन्यकायाः ॥ ६ ॥

विश्वामरेन्द्रपदविभ्रमदानदक्ष-
मानन्दहेतुरधिकं मधुविद्विषोऽपि ।
ईषन्निषीदतु मयि क्षणमीक्षणार्ध-
मिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ७ ॥

इष्टा विशिष्टमतयोऽपि नरा यया द्रा-
ग्दृष्टास्त्रिविष्टपसदथ पदं भजन्ते ।
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ८ ॥

हस्ताभ्यां सा तमादाय स्वाङ्के कृत्वोपगूह्य च ।
प्राह त्वं शारदैवासि लीलया पुरुषाकृतिः ॥ ६४ ॥

अहो ते भारती वत्स गभीरमधुरोदया ।
ययाहं तोषितास्म्यद्य यथाकर्षणविद्यया ॥ ६५ ॥

---

दद्याद्दयानुपवनो द्रविणाम्बुधारा-
मस्मिन्न किंचनविहंगशिशौ विषण्णे ।
दुष्कर्मघर्ममपहाय चिराय दूरा-
न्नारायणप्रणयिनीनयनाम्बुवाहः ॥ ९ ॥

गीर्देवतेति गरुडध्वजभामिनीति
शाकंभरीति शशिशेखरवल्लभेति ।
सृष्टिस्थितिप्रलयसिद्धिषु संस्थितायै
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोऽस्तु रमणीयगुणाश्रयायै ।
शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥

नमोऽस्तु नालीकनिभाननायै
नमोऽस्तु दुग्धोदधिजन्मभूत्यै ।
नमोऽस्तु सोमामृतसोदरायै
नमोस्तु नारायणवल्लभायै ॥ १२ ॥

किं तु व्यवसितं तेऽद्य मन्ये वत्स सुदुर्घटम् ।
यदेभिर्हि जनैः पूर्वं श्रेयो दारिद्र्यनाशनम् ॥ ६६ ॥

न किंचिदभ्याचरितं येन प्रीयेय तेष्वहम् ।
वृणीष्वान्यं वरं तात जहीहीमं दुराग्रहम् ॥ ६७ ॥

श्रियमेवं भाषमाणां प्रश्रितः प्रत्युवाच सः ।
मातर्मयि प्रसन्नासि यदि दित्ससि वा वरम् ॥ ६८ ॥

कुरुष्वेमं गृहजनं त्वदपाङ्गैकभाजनम् ।
आविर्भावोऽम्ब तेऽमीषां व्यनक्ति प्राक्तनं शुभम् ॥ ६९ ॥

---

नमोऽस्तु हेमाम्बुजपीठिकायै
नमोऽस्तु भूमण्डलनायिकायै ।
नमोऽस्तु देवादिदयापरायै
नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥ १३ ॥

नमोऽस्तु देव्यै भृगुनन्दनायै
नमोऽस्तु विष्णोरुरसि स्थितायै ।
नमोऽस्तु लक्ष्म्यै कमलालयायै
नमोऽस्तु दामोदरवल्लभायै ॥ १४ ॥

नमोऽस्तु कान्त्यै कमलेक्षणायै
नमोऽस्तु भूत्यै भुवनप्रसूत्यै ।
नमोऽस्तु देवादिभिरर्चितायै
नमोऽस्तु नन्दात्मजवल्लभायै ॥ १५ ॥

अलक्ष्मीं नाशयत्वेषामिदमामलकीफलम् ।
इत्युक्त्वा कमलापादकमले तत्फलं न्यधात् ॥ ७० ॥

तद्गुणैः प्रथिता पद्मा पश्यतस्तस्य तद्गृहम् ।
कनकामलकासारैः पूरयित्वा तिरोदधे ॥ ७१ ॥

इत्थं फल्ग्वपि यत्किंचित्पृथुकामलकोपमम् ।
भक्त्यार्पितं महेशाने प्रसूतेऽत्यन्तमीप्सितम् ॥ ७२ ॥

अतो हि शास्ति भगवान्भक्तिपूर्वं यदर्प्यते ।
फलपुष्पादि तत्सर्वं संप्रीणयति मामिति ॥ ७३ ॥

श्रीदश्रियैवमनुगृह्य कुटुम्बिनीं ता-
मासप्तमाब्दमयमाप्तसमस्तविद्यः ।
स्वं प्रीणयन्गुरुमभीप्सितदक्षिणाभिः
पर्युत्सुकस्वजननीचरणौ ववन्दे ॥ ७४ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
श्रीभगवत्पादाभ्युदये कौमारवर्णनं नाम
द्वितीयः सर्गः ॥



## तृतीयः सर्गः ॥



वन्दमानं तमाश्लिष्य चिरविश्लेषजं प्रसूः ।
विजहौ दुःसहं तापं प्रावृषं प्राप्येव निर्वृता ॥ १ ॥

हिरण्यगर्भाद्यानन्दा मात्राः स्युर्यस्य तं च सा ।
ब्रह्मानन्दं सुताश्लेषानन्दमात्राममन्यत ॥ २ ॥

घ्राणेनेवोपजिघ्रन्ती लिहन्तीव च जिह्वया ।
पिबन्तीव च चक्षुर्भ्यां प्रेम्णा परवशाभवत् ॥ ३ ॥

स नैकविद्याभ्यासादप्युक्तस्वजनसेवनम् ।
मन्यते स्म परं धर्मं धर्मव्याधवचः स्मरन् ॥ ४ ॥

मातृशुश्रूषणपरः सायंप्रातरतन्द्रितः ।
अग्न्यादित्याद्युपस्थायी भिक्षाशी स्थण्डिलेशयः ॥ ५ ॥

वसानो वसनं शाणमैणेयं चोत्तरीयकम् ।
दधानो मेखलां श्लक्ष्णां त्रिवृतं मुञ्जनिर्मिताम् ॥ ६ ॥

कमण्डलुं तथा बैल्वं दण्डं केशान्तिकं दधत् ।
नित्यस्वाध्यायनिरतः सम्यग्विनियतेन्द्रियः ॥ ७ ॥

ब्रह्मवर्चसनिर्वृत्ततेजसाग्निरिव ज्वलन् ।
प्रथमाश्रममाहात्म्यं स बभौ ख्यापयन्निव ॥ ८ ॥

किमेष भगवान्साक्षाद्वामनः स्याद्बृहद्व्रती ।
अथ वा नैतदेवं स्याच्छद्मनैव स तापसः ॥ ९ ॥

अयं तपस्यतितरामुच्चैरुपाधिवर्जितः ।
अतः साक्षात्तपः क्रीडत्येवंरूपेण भाग्यतः ॥ १० ॥

इति प्रवादो लोकानां संजज्ञे कौतुकोदितः ।
तदन्वभ्यागताच्छम्भुतेजसस्तापसोत्तमात् ॥ ११ ॥

दुर्वाससः सुप्रसन्नान्मन्त्रग्राममविन्दत ।
तथा योगविधिं कृत्स्नं सिद्धीरप्यणिमादिकाः ॥ १२ ॥

लोकेऽपि भाविकल्याणं संपन्नं दैवसंपदा ।
भद्राण्यभिद्रवन्त्याशु निम्नमाप इव स्थलम् ॥ १३ ॥

किमु वक्तव्यमीशाने विभूतीनामधीश्वरे ।
उपातिष्ठन्त ताः सर्वा विद्या भानुमिव प्रभाः ॥ १४ ॥

कदाचिद्धर्मतप्ताया [1]मातुः स्नानार्थमापगाम् ।
तदाकर्षणमन्त्रज्ञस्तुष्टावाकृष्टुमन्तिके ॥ १५ ॥

---

1. अत्राचार्यविरचितो महापगास्तवो बहुषु पुस्तकालयेषु अन्विष्यमाणोऽपि न लभ्यते । उपलभ्यते तु संक्षेपशंकरविजयादिभिः स स्तवोऽस्तीति । "अम्बार्थं यदियं नीता तटिनी सद्म संनिधिम् । अम्बा

स्ववश्याऽऽपगा सापि स्रवन्ती निकषागृहम् ।
तर्पयामास पयसा धेनुर्वत्समिवानिशम् ॥ १६ ॥

अप्राकृताभिर्लीलाभिर्विकसन्त्या दिने दिने ।
गुणोपहूतैर्जनताश्रृङ्गैर्जेगीयमानया ॥ १७ ॥

आमोदभरवाहिन्या दिक्षु तत्कीर्तिमालया ।
कर्णपूरीभवन्त्याऽऽसीद्राजा तद्दर्शनोत्सुकः ॥ १८ ॥

सचिवः प्रेषितस्तेन तदानयनकाङ्क्षिणा ।
प्रणम्य शंकरं भक्त्या प्रश्रयेण व्यजिज्ञपत् ॥ १९ ॥

विद्वन् केरलभूपालो गुणगृह्यो गुणाकर ।
दिदृक्षते त्वाऽऽन्यभूपदिदृक्षितपदाम्बुजः ॥ २० ॥

इत्युक्तवन्तं तं राजभृत्यं स प्राह सस्मितम् ।
वयं हि भिक्षवो धीमंस्तृप्ता भिक्षान्नमात्रया ॥ २१ ॥

किं नस्तपस्विनां कार्यं मदमोहास्पदैर्धनैः ।
क्व मण्डलेश्वराराध्या दुराराध्या महीभुजः ॥ २२ ॥

क्व च विद्या धनाराध्या वयं शमदमाश्रयाः ।
न धनेनार्थिनोऽर्थी यो राजद्वारि स तिष्ठतु ॥ २३ ॥

---

तरङ्गिणीत्येव कथ्यतेऽद्यापि सा खलु ॥" इति चिद्विलासीयेन तस्या अम्बानदीति प्रसिद्धिरिति च ।

यदा धनार्थिनः स्याम तदा पश्याम भूपतिम् ।
संमानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ॥ २४ ॥

राजान्नं तेज आदत्त इति च स्मर्यते खलु ।
वयं ब्रह्मकुलोद्भूताः प्राक्तनैः पुण्यसंचयैः ॥ २५ ॥

तन्नः क्षपयितुं नालं दुर्लभं ब्रह्मवर्चसम् ।
भद्र गत्वा स्ववित्तेन सेव्यतां स्वामिसंनिधिः ॥ २६ ॥

ततः प्रतिनिवृत्तेन मन्त्रिणोक्ते यथायथम् ।
श्रुत्वा रोमाञ्चितो राजा न्यमज्जद्विस्मयाम्बुधौ ॥ २७ ॥

अहो बतैष सुमहान्यच्छ्रियं स्वयमागताम् ।
जहौ जनोऽयं यल्लोभाद्भ्रमीति दिवानिशम् ॥ २८ ॥

अभिगम्यार्हणीयोऽयं श्रेयस्कामैर्यथेश्वरः ।
इति निश्चित्य मनसा राजा परिजनैः सह ॥ २९ ॥

पद्भ्यामेव समासाद्य शंकरस्य निवेशनम् ।
किरीटरत्ननिकरैः कुर्वन्नीराजनामिव ॥ ३० ॥

मूर्ध्ना गुरुपदाम्भोजे पस्पर्श विनयान्वितः ।
प्रससाद गुरुश्चास्मिन्भक्तिप्रवणचेतसि ॥ ३१ ॥

इयं हि महतां शैली यत्प्रपन्नेष्वनुग्रहः ।
राज्ञोऽनपत्यता दुःखं पुत्रेष्ट्या शमयन्विभुः ॥ ३२ ॥

सत्संतानस्य तस्याद्यद्धर्मे नित्यरतिं वरम् ।
शाम्भवा मुनयो जातु शंकरं द्रष्टुमागताः ॥ ३३ ॥

उपमन्युरगस्त्यश्च गौतमोऽन्ये च तापसाः ।
देदीप्यमानांस्तपसा तान्मुनीन्द्रान्गृहागतान् ॥ ३४ ॥

यथार्हं पूजयामास सोऽर्घ्यपाद्यासनादिभिः ।
सभाजनीयमहसं शम्भोरपरविग्रहम् ॥ ३५ ॥

सभाजयन्तं विनयात्तं सर्वे बहु मेनिरे ।
सुतस्य श्रेयसि सदा प्रसक्तहृदया सती ॥ ३६ ॥

कृतातिथ्यान्मुनिवरान् विश्रान्तानिदमब्रवीत् ।
अद्य धन्याऽस्मि भवतां पाविता पदपांसुभिः ॥ ३७ ॥

यद्यपि प्रेष्ठविश्लेषाद्दुर्भगा नष्टमङ्गला ।
ब्रह्मकल्पा भवन्तो यत्पावयन्ति कुटीमिमाम् ॥ ३८ ॥

अतो मन्येऽस्य बालस्य पूर्वैस्तप्तं महत्तपः ।
प्रस्तुतं किमपि प्रष्टुं प्रत्ययादुत्सुकं मनः ॥ ३९ ॥

तत्प्रसीदत वत्सस्याशंसे ज्ञातुं शुभाशुभे ।
इत्येवमनुयुञ्जानां कुम्भयोनिरुवाच ताम् ॥ ४० ॥

धन्यधन्यैव भद्रे त्वं यदनेनासि पुत्रिणी ।
जायापत्योः संगतयोर्विप्रयोगो ध्रुवः सति ॥ ४१ ॥

तस्मिन्नपरिहार्येऽर्थे जनो नार्हति गर्हणाम् ।
अन्यथा रामजननी कौसल्या शोभना कथम् ॥ ४२ ॥

तदलं त्रिजगत्पूज्येऽप्यात्मन्येवमवज्ञया ।
इमं हि वेदगर्भांश इति वेदविदो विदुः ॥ ४३ ॥

तत्तच्छास्त्रप्रणेतारो विवरीतुं स्वमाशयम् ।
जाता एकात्मनेत्याहुः सर्वशास्त्रविचक्षणाः ॥ ४४ ॥

अयं मन्त्रेषु दुर्वासा योगेष्वेव पतञ्जलिः ।
बुद्ध्या बृहस्पतिसमः काव्ये काव्यसमो ह्ययम् ॥ ४५ ॥

ज्ञानवैराग्यसंपत्तौ समानः सनकादिभिः ।
मेधाप्रतिभयोर्देवि त्वत्सुतस्त्वत्सुतोपमः ॥ ४६ ॥

बहुना किमिमं जानीह्याधिकारिकपूरुषम् ।
एवं महामहिम्नोऽस्य त्वायुरल्पावसीयते ॥ ४७ ॥

वयं तदभिवृद्ध्यर्थं संप्राप्ताः स्मः शिवाज्ञया ।
अष्टवर्षोऽयमधुना दीयन्तेऽष्टौ पुनः समाः ॥ ४८ ॥

एवं षोडशवर्षः सन्नेष श्रेयो विधास्यति ।
भविष्यत्यस्य पश्चाच्च श्रेयः कल्याणि मा शुचः ॥ ४९ ॥

इत्युक्त्वा तेषु यातेषु माता पुत्रायुषोऽल्पताम् ।
स्मृत्वाऽऽर्ता विदधे तेन वीतशोकाऽऽत्मविद्यया ॥ ५० ॥

दारार्थमात्मनो जातु व्यग्रां तां पुनरूचिवान् ।
अम्ब तत्त्वविदां मान्याऽस्यतो वक्ष्यामि ते शृणु ॥ ५१ ॥

[1]विरक्तः प्रव्रजेद्धीमान्सरक्तस्तु गृहे वसेत् ।
यथाधिकारं विहिताविति न्यासगृहाश्रमौ ॥ ५२ ॥

रागो मूलं गृहस्थस्य वैराग्यमितरस्य तु ।
इति व्यवस्थितं देवि रागगन्धोऽपि नास्ति मे ॥ ५३ ॥

श्ववान्ताम्नोपमान्मत्वा विषयान्धीर्हृणीयते ।
विवेकी को नु वा रज्येद्बीभत्से स्त्रीकलेवरे ॥ ५४ ॥

अहो भ्रान्तिरहो मौढ्यं लोकस्य पशुधर्मणः ।
यदयं दुर्भगे मांसयन्त्रपङ्के निमज्जति ॥ ५५ ॥

[2]मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥

इत्यादिश्रुतिघोषेषु बधिरा हन्त कामिनः ।
न मे कामलवोऽप्यस्ति येन स्त्रीभृत्यताऽस्तु मे ॥ ५७ ॥

न च प्रजां चक्रमिरे वीतरागाः पुरर्षयः ।
ब्रह्मणः स्थानमापुस्ते श्मशानमितरे जनाः ॥ ५८ ॥

---

1. नारदपरिव्राजकोपनिषदि तृतीयोपदेशे ।

2. महोपनिषदि तृतीयाध्याये । तथा याज्ञवल्क्योपनिषदि च ।

तदलं देवि निर्बध्य मां व्युत्थानकृतोद्यमम् ।
अनुजानीहि भद्रं ते भूयाच्छ्रेयस्तवोत्तमम् ॥ ५९ ॥

श्रुत्वैव निपपातैषा हा हताऽस्मीति मूर्छिता ।
आश्वास्य चाह हा किं मे त्वते त्वारं निषिञ्चसि ॥ ६० ॥

कथं मां भर्तृशोकार्तां हातुमिच्छसि पुत्रक ।
गृहिणो हि वसिष्ठाद्या महान्तः किमकोविदाः ॥ ६१ ॥

गृहस्थ एवाश्रमिणां सर्वेषां कारणं विदुः ।
यथा तव पिता तात यथा वा ते पितामहः ॥ ६२ ॥

तथा वर्तस्व तदलं शप्तोऽसि त्वं ममोपरि ।
निरुद्धः प्राज्ञयाऽप्येवं मात्रा विश्लेषभीरुणा ॥ ६३ ॥

वेलयेव पयोराशिः कुण्ठितप्रसरोऽवसत् ।
अथैकदाऽवतीर्णोऽसौ स्नातुं सरिति तत्क्षणम् ॥ ६४ ॥

गृहीतपादो नक्रेण ययाचेऽम्बां ससंभ्रमम् ।
इदानीं वाऽनुजानीहि जीवन्तं मां यदीच्छसि ॥ ६५ ॥

प्राहग्रहाद्विमुच्येय संन्यासग्रहणे ध्रुवम् ।
साऽप्यन्वजानात्संभ्रान्ता जीवितं रक्ष पुत्रक ॥ ६६ ॥

येन केनाप्युपायेन जीवन्भद्राणि पश्यति ।
मया संन्यस्तमित्याह सोऽप्युच्चैस्त्रिरविक्लवः ॥ ६७ ॥

तत्क्षणं स तु नक्रत्वान्मुक्तो गन्धर्वतां भजन् ।
प्रणम्य यमिनां श्रेष्ठं गतवांस्तदनुज्ञया ॥ ६८ ॥

स हि पुष्परथो नाम गन्धर्वोऽन्तर्जले वसन् ।
तत्रावतरतः स्नातुं चकर्ष पदयोर्द्विजान् ॥ ६९ ॥

[1]तच्छापाद्ग्राहतां प्राप्तो मुक्तः शंकरतेजसा ।
सान्त्वयित्वाथ जननीं स्मृत्युपस्थानसंविदा ॥ ७० ॥

आप्तेषु बन्धुवर्गेषु तां निक्षिप्य धनैः समम् ।
प्रस्थातुकामः शुश्राव स वाणीमशरीरिणीम् ॥ ७१ ॥

तरङ्गिण्यास्तरङ्गौघैराकृष्टाया गृहान्तिकम् ।
ममालयस्य प्राकारो मृण्मयो भिद्यतेऽनिशम् ॥ ७२ ॥

तस्य रक्षां समीचीनां कृत्वा स्वैरं व्रजेरिति ।
ततः कृष्णालयं किंचिद्दूरदेशे निरीतिके ॥ ७३ ॥

यथाविधि प्रतिष्ठाप्य दिव्यवाचानुमोदितः ।
सहसाऽऽकाशमार्गेण प्रपेदे नर्मदातटम् ॥ ७४ ॥

विविक्तमृषिभिर्जुष्टं सुप्रशान्तमृगद्विजम् ।
[2]गोविन्दभगवत्पादयोगी यत्र तपस्यति ॥ ७५ ॥

---

1. नाम्ना पुष्परथः ख्यातो गन्धर्वाणामधीश्वरः । अहं शप्तः पुरा धात्रा इति ब्रह्मणा शप्तत्वमुक्तं चिद्विलासीये ॥

2. बदरिकाश्रमे श्रीगोविन्दभगवत्पादवसतिरिति चिद्विलासीये कथ्यते । बहुग्रन्थानुरोधात्तस्य नर्मदातटे एव वसतिरिति गम्यते ॥

तमात्मनो गुरुं योग्यं निश्चित्य प्रत्यपद्यत।
प्रादेशमात्रविवरां तद्गुहां पश्यतो मुनेः ॥ ७६ ॥

प्रादेशमात्रमात्मानं गुहास्थं निजसंस्थया ।
व्याचष्टेऽसौ गुरुरिति हृल्लेखः समजायत ॥ ७७ ॥

तद्गुहां त्रिःपरिक्रम्य शेषांशं तं स्तुवन् जगौ ।
ब्रह्मविद्याभिलाषी त्वां प्रपद्ये भगवन्निति ॥ ७८ ॥

कस्त्वमित्यनुयुञ्जाने तस्मिन् योगीश्वरे कविः ।
इत्थं न भूमिरित्याद्यैः पद्यैः प्रत्युत्तरं ददौ ॥ ७९ ॥

[1]न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः ।
अनेकान्तिकत्वात्सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥

न वर्णा न वर्णाश्रमाचारधर्मा
न मे धारणाध्यानयोगादयोऽपि ।
अनात्माश्रयाहंममाध्यासहाना-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

न माता पिता वा न देवा न लोका
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।

---

1. दशश्लोकीति निर्वाणदशकमिति चैतेषां श्लोकानां नाम ॥

सुषुप्तौ निरस्तातिशून्यात्मकत्वा-
    त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

न सांख्यं न शैवं न तत्पाञ्चरात्रं
    न जैनं न मीमांसकादेर्मतं वा ।
विशिष्टानुभूत्या विशुद्धात्मकत्वा-
    त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥

न चोर्ध्वं न चाधो न चान्तर्न बाह्यं
    न मध्यं न तिर्यङ् न पूर्वाऽपरा दिक् ।
वियद्व्यापकत्वादखण्डैकरूपं
    तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥

न शुक्लं न कृष्णं न रक्तं न पीतं
    न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वा-
    त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
    न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णु-
    स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥

न जाग्रन्न मे स्वप्नको वा सुषुप्ति-
    र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीयं
    तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ८ ॥

अपि व्यापकत्वाद्धि तत्वप्रयोगा-
स्स्वतः सिद्धभावादनन्याश्रयत्वात् ।
जगत्तुच्छमेतत्समस्तं तदन्य-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ९ ॥

न चैकं तदन्याद्द्वितीयं कुतः स्या-
न्न वा केवलत्वं न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वा-
त्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

श्लोकैरुपनिषत्सारैरुपश्लोकितवत्यसौ ।
स्वपादौ दर्शयामास पूजयामास सोऽपि तौ ॥ ८० ॥

गुरुपादस्य पूज्यत्वनियमं दर्शयन्नृणाम ।
भगवानपि निध्याय ध्यानेनैनमभाषत ॥ ८१ ॥

धर्मसंस्थापनाय त्वं जातोऽसि भुवि शंकरः ।
सर्वज्ञः सर्वविद्यानामीशानोऽपि विडम्बयन् ॥ ८२ ॥

जनतां सर्वलोकानां गुरुर्गुरुमपेक्षसे ।
मा भूदगुरुका विद्येत्याचारं परिरक्षितुम् ॥ ८३ ॥

इति प्रशस्य भगवान् संन्यासं तस्य मानसम् ।
कर्मणा विशदीकृत्य महावाक्यचतुष्टयम् ॥ ८४ ॥

---

व्यासप्रार्थनया सदाशिवः शुकाय ध्यानन्यासपूर्वकं महावाक्यचतुष्टयं दिदेशेति रहस्योपनिषदि । तद्विशेषास्तु गुरूपदेशक्रमेण ज्ञातव्याः ।

उपादिशद्यतीन्द्राय ध्यानन्यासादिपूर्वकम् ।
अब्रवीच्च पुनर्विद्वन्नेतां विद्यां सदाशिवः ॥ ८५ ॥

विततार स्वशिष्याय शुकाय व्याससूनवे ।
स च वैयासकिः प्रादाद्गौडपादाय योगिने ॥ ८६ ॥

तस्मादियं मां संप्राप्ता गौडपादमहामुनेः ।
इत्युक्त्वा चन्द्रमौलीशं रत्नगर्भं गणाधिपम् ॥ ८७ ॥

शिवात्क्रमादिहायातं ददौ तस्मै स देशिकः ।
अथ च ब्रह्मसूत्रार्थं व्याचष्टे स्म यथायथम् ॥ ८८ ॥

स तु पारमहंस्येन तया च ब्रह्मविद्यया ।
रेजे यथाग्निरादित्यतेजोयोगे समिद्धुतः ॥ ८९ ॥

उत्कूलेन प्रवाहेण सीददाश्रममण्डलम् ।
ररक्ष शंकरो गृह्णंस्तदोघं स्वकमण्डलौ ॥ ९० ॥

गोविन्दभगवत्पादस्तदाकर्ण्यातिविस्मितः ।
शंकरं सदसि प्राह व्यासवाक्यमनुस्मरन् ॥ ९१ ॥

आवेदितो मुनिगणैः कृष्णद्वैपायनः पुरा ।
भगवन् जानकीं सीतां रामभार्यां पतिव्रताम् ॥ ९२ ॥

प्रसह्य स्ववशे कर्तुं दशग्रीवो यथोद्यतः ।
तथैवोपनिषदीं विद्यां प्रत्यग्ब्रह्मैक्यतत्पराम् ॥ ९३ ॥

द्वैतिनः स्ववशीकर्तुं प्रहर्तुं चोत्थिता मिथः ।
प्रमाणयन्ति तादर्थ्यात्सूत्राणि निरङ्कुशाः ॥ ९४ ॥

हा हन्त दुर्दशां प्राप्ता विद्या ह्यद्वैतदर्शिनी ।
मलिम्लुचान्तरगता साध्वीव कलिराक्षसैः ॥ ९५ ॥

मदीयेति मदीयेति कृष्यते सर्वतो हठात् ।
रक्षां विधेहि सीदन्त्या विद्याया भगवन्निति ॥ ९६ ॥

तान्बभाषे स भगवान्कोऽप्योघं शमयिष्यति ।
कुम्भेन कुम्भज इव सागरं सागरोपमम् ॥ ९७ ॥

स एव भाष्यं सूत्राणां यथावत्संप्रणेष्यति ।
परिश्रमं मे सफलं करिष्यत्याचिरादिति ॥ ९८ ॥

मन्ये त्वामेव निर्दिश्य प्रोक्तवान् बादरायणः ।
वाराणसीमधिवसन् गुरुशासनपालकः ।
मन्दाकिनीमिव जगत्पावनीं कीर्तिमाप्नुहि ॥ ९९ ॥

मूर्ध्ना वहन् गुरुतरं गुरुशासनं त-
च्छ्रेयोऽनुशासनकृते भवमाश्रितानाम् ।
निर्वोढुमेष कृतधीर्हरराजधानीं
वाराणसीं परमहंसगुरुः प्रपेदे ॥ १०० ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
**श्रीभगवत्पादाभ्युदये पारमहंस्यवर्णनं नाम**
तृतीयः सर्गः ॥

# चतुर्थः सर्गः ॥



स विवेश पुरीं काशीं काशमानां स्वया श्रिया ।
अवतीर्णामिव ब्रह्मपुरीं भुवि रिरंसया ॥ १ ॥

उच्छ्रिताभिः पताकाभिस्तर्जयन्तीमिवान्तकम् ।
विना ज्ञानश्रमं जन्तोरन्ते कैवल्यदायिनीम् ॥ २ ॥

पूरयन्तीं कर्णरन्ध्रं ब्रह्मघोषैरनारतम् ।
नानाशास्त्रार्थचर्चाभिर्मुखरीकृतदिङ्मुखाम् ॥ ३ ॥

भगवत्या च जाह्नव्या प्रणयिन्या महेशितुः ।
जले कूले च हंसौघैः शोभनैः शोभमानया ॥ ४ ॥

सर्वपापप्रणाशिन्या सकृन्मज्जनमात्रतः ।
दयिताया पुरी शंभोः सखीवल्लाल्यतेऽनिशम् ॥ ५ ॥

देव्या यत्र विशालाक्ष्या सदा क्रीडति शंकरः ।
गङ्गीभूय कृपा शंभोर्यत्र जागर्ति मुक्तये ॥ ६ ॥

तां यमीन्द्रेऽधिवसति तद्गुणैरधिवासिताः ।
सद्यः काष्ठाः ससौरभ्यैर्हैमतामरसैरिव ॥ ७ ॥

श्रीकाशी मुक्तिनगरी श्रीगुरुर्मुक्तिनायकः ।
मुक्तिप्रदा ब्रह्मविद्या हन्त भाग्यं जनुष्मताम् ॥ ८ ॥

अध्यात्मविद्यासाम्राज्यचक्रवर्त्यनुपालिताम् ।
तां पुरीं भेजिरे नाना दिग्भ्यो लोका मुमुक्षवः ॥ ९ ॥

तेषु श्रीगुरुपादाब्जच्छायाशान्तभवार्तिषु ।
प्रागल्भ्यं कुण्ठितं मृत्योः कृपणेषु निरङ्कुशम् ॥ १० ॥

ब्रह्मचार्यथ कोऽप्येत्य प्रपद्ये शरणं गुरो ।
त्वामित्युक्त्वा नमंस्तेन पृष्टोदन्तो व्यजिज्ञपत् ॥ ११ ॥

अहं [1]सनन्दनो नाम चोलदेशोद्भवो द्विजः ।
वेदवानकृतोद्वाहो विरक्तोऽस्मि गृहाश्रमात् ॥ १२ ॥

लब्ध्वा मानुष्यकं दैवाद्ब्राह्मण्यं च विशेषतः ।
अधीत्य विधिवद्वेदान् सुकल्यकरणश्च सन् ॥ १३ ॥

कथं नु रमते विद्वान् गृहेषु पशुधर्मसु ।
विरक्तेन्द्रियवर्गोऽहमैहिकामुष्मिकार्थतः ॥ १४ ॥

अन्विष्य सद्गुरुं तत्र तत्राहं पर्यटंश्चिरम् ।
यदृच्छया प्रपन्नोऽस्मि कुरु भृत्यमिमं जनम् ॥ १५ ॥

---

1. अहोबलक्षेत्रनिवासिनोर्लक्ष्मीमाधवनाम्नोर्द्विजयोः पुत्रो विष्णुशर्मा नामायं ब्रह्मचारी आचार्येण संन्यासप्रदानानन्तरं सनन्दन इति कृतनामधेय इति चिद्विलासीये ॥

तस्मिन्नावेदयत्येवं ध्यानावेक्षित तद्गुणः ।
योगी तं कृतसंन्यासं शिष्यं चक्रे सनन्दनम् ॥ १६ ॥

स चान्तेवासिषु श्रैष्ठ्यं गुरुभक्त्याऽऽनशे क्रमात् ॥ १७ ॥

सर्वलोकसमस्यापि भजमानेष्वनुग्रहः ।
स्वभावो नात्र वैषम्यमीश्वरस्येव सद्गुरोः ॥ १८ ॥

इति तत्त्वमविज्ञाय छात्रेष्वन्येष्वसूयुषु ।
अन्यादृशीं तस्य भक्तिं प्रचिख्यापयिषुर्गुरुः ॥ १९ ॥

गङ्गायास्त्वपरे पारे तिष्ठन्तं स सनन्दनम् ।
शीघ्रमेहीत्याजुहाव सर्वेषामपि पश्यताम् ॥ २० ॥

तथाऽऽहूतः स गुरुणा स्रोतस्विन्या अगाधताम् ।
अनादृत्यर्जुमार्गेण गन्तुं गुर्वन्तिकं जवात् ॥ २१ ॥

अवातरज्जले सद्यस्तद्भक्त्या साऽपि निम्नगा ।
पादन्यासेषु विन्यस्य पद्मं पद्ममथात्पदम् ॥ २२ ॥

स च सत्वरमभ्येत्य तीरं गुर्वन्तिके स्थितः ।
आसन्नपत्रपानम्राः सर्वेऽपि तदसूयकाः ॥ २३ ॥

एवं च गुरुभक्तेषु प्रीतिं बध्नन्ति देवताः ।
असाध्यमितरैः कार्यं तेषामीषत्करं भवेत ॥ २४ ॥

ततः प्रभृति तं प्राहुः पद्मपादं विपश्चितः ।
इति शिष्येषु मुख्योऽभूत्पद्मपादः सनन्दनः ॥ २५ ॥

अथान्यः कोऽपि शिष्योऽभूद्गिरिर्नाम महागुरोः ।
अन्वर्थनामा गिरिवद्गुरौ भक्त्याऽप्रकम्प्यया ॥ २६ ॥

यथा शुश्रूषया सिद्धिर्न तथा श्रवणादिना ।
इति निश्चितधीरेष कैङ्कर्ये निरतो गुरोः ॥ २७ ॥

इतरेऽमुं मन्दमतिं विद्यानर्हं च मेनिरे ।
एकदा पाठसमयेऽभ्यागतेऽनागते गिरौ ॥ २८ ॥

प्रतीक्ष्यतां क्षणमिति वदंस्तदवहेलनम् ।
बुद्ध्वाऽस्मै सकला विद्याः प्राहिणोन्मनसा गुरुः ॥ २९ ॥

[1]वेधदीक्षोपदेशं यं कथयन्ति विचक्षणाः । ॥ ३० ॥

स चादित्यकरोद्भिन्नपद्मकोश इव क्षणात् ।
तत्कृपोद्बुद्धहृत्पद्मो वाग्भृङ्गीमकरन्दवान् ॥ ३१ ॥

श्रुत्यन्तासारनिष्यन्दैः श्लोकैस्तोटकलक्षणैः ।
गायन्ननुभवानन्दं प्रपेदे चरणौ गुरोः ॥ ३२ ॥

---

1. स्पर्शदीक्षा, दृग्दीक्षा, वेधदीक्षेति दीक्षात्रयम्—तत्र यथा पक्षी [प]क्षाभ्यां शिशुं स्पृष्ट्वा पोषयेत्तथा हस्तमस्तकसंयोगेनानुग्रहः स्पर्श[दीक्षा]; यथा मत्स्यः स्वापत्यानि वीक्षणेनैव पोषयेत् तथा दृष्ट्याऽनुग्रहो [दृग्दी]क्षा; यथा कूर्मः स्वापत्यानि ध्यानेन पोषयेत्तथा ध्यानेनानुग्रहो [वेध]दीक्षा

भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ॥ १ ॥

विनिवर्त्य रतिं विषये विषमां परिमुच्य शरीरनिबद्धमतिम् ।
परमात्मपदे भव नित्यरतो जहि मोहमयं भ्रममात्ममते ॥ २ ॥

विसृजान्नमयादिषु पञ्चसु तामहमस्मि ममेति मतिम् ।
दृशि रूपमनन्तमजं विगुणं हृदयस्थमवेहि सदाहऽमिति ॥ ३ ॥

जलभेदकृता बहुतेव रवेर्घटिकादिकृता नभसोऽपि यथा ।
मतिभेदकृता तु तथा बहुता तव बुद्धिदृशोऽविकृतस्य सदा ॥

दिनकृत्प्रभया सदृशेन सदा जनचित्तगतं सकलं स्वचिता ।
विदितं भवताऽविकृतेन सदा यत एवमतोऽसि सदेव सदा ॥

पद्मपादादयः श्रुत्वा तदुक्तीर्विस्मिता जगुः ।
अहो कृपाविवर्तोऽयं शासतोऽस्मान्महागुरोः ॥ १३ ॥

प्रथतेऽस्म तदारभ्य [1]तोटकाचार्य इत्यसौ ।
स एव भगवत्पादभाष्यार्थं हृदयंगमम् ॥ १४ ॥

हृदयज्ञो विवृण्वन् सञ्ज्ञानन्दगिरिरुच्यते ।
प्रभाकरो नाम कश्चिच्छ्रीबलिग्रामजो द्विजः ॥ १५ ॥

---

1. त्रोटकाचार्य इति चाहुः ॥ "इह तोटकमम्बुधिसैः कथितम् । इति तोटकवृत्तकरणोदितत्वात्संज्ञायाः" "तोटकाचार्य" इत्येव समीचीनम् ॥

जडेन सूनुनाऽत्यर्थं दूयमानो दिवानिशम् ।
आकर्ण्य परमाचार्यं सर्वशक्तिसमन्वितम् ॥ ३६ ॥

स्वपादमूलं भजतां सर्वाभीष्टफलप्रदम् ।
अभ्येत्य नत्वा योगीन्द्रपादे पुत्रं निपातयन् ॥ ३७ ॥

निवेदयामास गुरो पुत्रोऽयं तपसाऽऽर्जितः ।
पूर्णत्रयोदशाब्दोऽपि न शृणोति न पश्यति ॥ ३८ ॥

न वक्त्येकामपि गिरं मूकान्धबधिरोपमः ।
वरं विभोऽनपत्यत्वं न जडेन सपुत्रता ॥ ३९ ॥

विभूतयो भगवतः श्रूयन्ते ह्यद्भुताद्भुताः ।
तदेनमजडं कृत्वा पाहि मां करुणानिधे ॥ ४० ॥

निपातितः स्वपदयोर्नोत्पपात यदा तदा ।
कस्त्वं जडेत्याह गुरुः सोऽप्युत्थायेदमब्रवीत् ॥ ४१ ॥

नाहं जडः किं तु जडः प्रवर्तते मत्संनिधानेन न संदिहे गुरो ।
षडूर्मिषड्भावविकारवर्जितं सुखैकतानं परमस्मि तत्पदम् ॥ १ ॥

निमित्तं मनश्चक्षुरादिप्रवृत्तौ
निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टा निमित्तं यथा यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ २ ॥

यमग्न्युष्णवन्नित्यबोधस्वरूपं
मनश्चक्षुरादीन्यबोधात्मकानि ।
प्रवर्तन्त आश्रित्य निष्कम्पमेकं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥

मुखाभासको दर्पणे दृश्यमानो
मुखत्वात् पृथक्त्वेन नैवास्ति वस्तु ।
चिदाभासको धीषु जीवोऽपि तद्व-
त्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ४ ॥

यथा दर्पणाभाव आभासहानौ
मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ५ ॥

मनश्चक्षुरादेर्वियुक्तः स्वयं यो
मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ६ ॥

य एको विभाति स्वतः शुद्धचेताः
प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ७ ॥

यथाऽनेकचक्षुः प्रकाशो रविर्न
क्रमेण प्रकाशीकरोति प्रकाश्यम् ।

अनेका धियो यस्तथैकप्रबोधः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ८ ॥

विवस्वत्प्रभातं यथा रूपमक्षं
प्रगृह्णाति नाभातमेवं विवस्वान् ।
तथा भात आभासयत्येकमक्षं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ९ ॥

यथा सूर्य एकोऽप्यनेकश्चलासु
स्थिरास्वप्सु चैकोऽप्यविभाव्यस्वरूपः ।
चलासु प्रभिन्नः स्वधीष्वेक एवं
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १० ॥

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा मन्यते निष्प्रभं चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११ ॥

समस्तेषु वस्तुष्वनुस्यूतमेकं
समस्तानि वस्तूनि यं न स्पृशन्ति ।
वियद्वत्सदा शुद्धसत्त्वस्वरूपः
स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२ ॥

इति दत्तोत्तरो देवस्तन्निदानमथोचत ।
कश्चिद्द्विजवरः पूर्वं सर्वशास्त्रार्थपारगः ॥ ४१ ॥

वीतरागस्तपस्तेपे संयमी यमुनातटे ।
तव प्रभाकर वधूर्द्विहायनमिमं सुतम् ॥ ४२ ॥

तदग्रे न्यस्य भगवन् क्षणं पश्येममित्यगात् ।
तस्मिन् ध्यानपरे बालो निपत्य सलिले मृतः ॥ ४३ ॥

स च निध्याय तत्कर्म न्यासनाशातुरो घृणी ।
विवेशास्य वपुर्योगी त्यक्त्वा स्वीयं वपुर्जले ॥ ४४ ॥

स एवायं पुनर्बन्धभिया जड इव स्थितः ।
असमञ्जस एव स्यादितःपरमपि त्वयि ॥ ४५ ॥

अयं मत्संनिधावेव महात्मा वस्तुमर्हति ।
इति तं विप्रमाश्वास्य भगवान् स्वानभाषत ॥

अहो अतिगभीरार्था अहो निगमसंमिताः ।
अहो हस्तामलकवदेते श्लोकाः स्फुटाशयाः ॥ ४७ ॥

इत्याचार्ये श्लाघमाने सर्वेऽपि तदनूदिरे ।
तादृक् श्लोकप्रणयनात्तं हस्तामलकं विदुः ॥ ४८ ॥

पद्मपादस्तोटकार्यो हस्तामलक एव च ।
तुर्यः सुरेश्वराचार्यस्तत्कथोपरि वर्ण्यते ॥ ४९ ॥

एत मुख्यतमाः शिष्या बहवः सन्ति चापरे ।
चिद्विलासः समित्पाणिः कृष्णदर्शनभानवः ॥ ५० ॥

ज्ञानकन्दः शुद्धकीर्तिर्बुद्धिवृद्धिमरीचयः ।
विष्णुगुप्तादयश्चान्ये शिष्यास्तस्य परःशताः ॥ ५१ ॥

कदाचिदभिषेकार्थं मध्याह्ने मस्करीश्वरः ।
विशालाक्ष्यालयद्वारा जगाम मणकर्णिकाम् ॥ ५२ ॥

मध्येमार्गं स चाद्राक्षीदाराद्दायान्तमन्त्यजम् ।
वसानं कच्चरं वासो दधानं मूर्ध्नि वारुणीम् ॥ ५३ ॥

धावतोऽग्रे विश्वकद्रून् बिभ्रतं चतुरः करे ।
अन्वीयमानं मातङ्ग्या दारकद्वययुक्तया ॥ ५४ ॥

मदालसं प्रनृत्यन्तं घूर्णमानं पदे पदे ।
तथाविधं विलोक्याग्रे गच्छ गच्छेत्यशाद्यतिः ॥ ५५ ॥

सोऽपि संस्कारवत्येव वाचा प्रत्याह योगिनम् ।

[1]अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात्
द्विजवर दूरीकर्तुं वान्छसि किं ब्रूहि गच्छ गच्छेति ॥ १ ॥

किं गङ्गाम्बुनि बिम्बितेऽम्बरमणौ चण्डालवापयः
पूरेऽप्यन्तरमस्ति काञ्चनघटीमृत्कुम्भयोश्चाम्बरे ।
प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ
विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदभ्रमः ॥ २ ॥

---

1. आनन्दगिरीये । अस्य मनीषापञ्चकस्य श्रीगोपालबालयतीन्द्र-
रचिता मधुमञ्जर्याख्या प्राचीनव्याख्या वर्तते । तद्व्याख्या चान्ते
दर्शयित्वा प्रकटीकरिष्यते ॥

श्रुत्वा परमहंसस्तद्वाक्यं हृद्यं मनीषिणाम् ।
नीरात्क्षीरमिवोद्धृत्य जहर्ष च जगाद च ॥ ५६ ॥

## मनीषापञ्चकम् ॥

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ।
सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्यास्ति चे-
च्चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ १ ॥

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणया शेषं मया कल्पितम् ।
इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले
चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ २ ॥

शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरो-
र्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना ।
भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके
प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ३ ॥

या तिर्यङ्नरदेवताभिरहमित्यन्तः स्फुटा गृह्यते
यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः ।
तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्
योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ४ ॥

यत्सौख्याम्बुधिलेशलेशत इमे शक्रादयो निर्वृता
यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।

यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मवि-
द्यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ५ ॥

एवं वदन् स नाद्राक्षीद्यतिश्चण्डालरूपिणम् ।
अदर्शच्च विशालाक्ष्या देव्या देवं पुरः स्थितम् ॥ ५७ ॥

सेव्यमानं सुरगणैः स्तूयमानं महर्षिभिः ।
महाककुदि राजन्तं वृषे कैलासंनिभे ॥ ५८ ॥

सद्यः कृत्तिरभूद्वासः कचरं कृत्तिवाससः ।
श्वानस्त्वाम्नायरूपेण तस्य पार्श्वमुपाश्रिताः ॥ ५९ ॥

सुरा सपदि गङ्गाऽसीद्गङ्गाधरजटातटे ।
तारकावपि संवृत्तौ गजाननषडाननौ ॥ ६० ॥

स्वपरीक्षार्थमायातं शम्भुं ज्ञात्वाऽन्त्यजात्मना ।
नत्वा स्तुत्वा चाह भूमन्ननुग्राह्यो ह्ययं जनः ॥ ६१ ॥

देहदृष्ट्याऽस्मि दासस्ते जीवदृष्ट्याऽस्मि तेंशकः ।
तत्त्वदृष्ट्या त्वमेवास्मि यथेच्छमनुशाधि माम् ॥ ६२ ॥

सश्लाघमूचे भगवान् यते साधूदितं त्वया ।
तत्त्वदृष्ट्याऽहमेव त्वं तथापि श्रूयतामिदम् ॥ ६३ ॥

वेदो ब्रह्मपरः कृत्स्नो ब्रह्म चाखण्डमद्वयम् ।
तदन्यथैव व्याख्यातं कणादकपिलादिभिः ॥ ६४ ॥

गतानुगतिकैर्लोकैस्तत्तद्धर्मानुगम्यते ।
अद्वैतार्थमहीत्येवं मग्ना द्वैतिमताम्बुधौ ॥ ६५ ॥

तामुद्दधार पोत्रीव गां व्यासः सूत्रदंष्ट्रया ।
तत्रापि चान्तरीभूय खलैः स्वैरं विशृङ्खलैः ॥ ६६ ॥

बहुधा छिद्रितं सूत्रं द्वैतिभिर्मूषकैरिव ।
अतस्त्वं ब्रह्मसूत्राणां प्रत्यग्ब्रह्मैक्यवादिनाम् ॥ ६७ ॥

श्रुतिसर्वस्वभूतानां भाष्येणार्थं स्फुटीकुरु ।
मतानि वेदबाह्यानि निरस्यन्नुपपत्तिभिः ॥ ६८ ॥

यथार्थभूतमद्वैतं स्थापयन् पालय श्रुतिम् ।
ततश्च विपुलां कीर्तिं वितन्वन्मामुपैष्यसि ॥ ६९ ॥

इत्यादिश्य गते शम्भौ यतिर्निर्वर्तितक्रियः ।
ययौ नारायणमुनेस्तीर्थं बदरिकाश्रमम् ॥ ७० ॥

भासितं जितषड्वर्गैर्जितश्वासैर्जितेन्द्रियैः ।
तपोधनैर्ज्ञानधनैर्न्यासिभिर्वीतकल्मषैः ॥ ७१ ॥

यत्रानभिज्ञा हिंसायाः श्वापदाः किं पुनर्जनाः ।
सर्वे ब्रह्मपरा यत्र सर्वे शमदमाकराः ॥ ७२ ॥

सर्वे च मैत्रीपरमाः सर्वे दीनदयालवः ।
तदाश्रमपदं पुण्यं यावद्विशति शंकरः ॥ ७३ ॥

तावद्विदितवृत्तास्ते ध्यानेन परमर्षयः ।
अभिगम्यार्चयामासुर्महेश्वरधिया यतिम् ॥ ७४ ॥

तान् स वृद्धान्वयःशीलतपोविद्यादिभिर्यतिः ।
नत्वा सूत्रार्थविवृतीः पश्यन्नन्याः पुनः पुनः ॥ ७५ ॥

तासां श्रुत्यर्थसूत्रार्थबाह्यतां विमृशन् सुधीः ।
वैयासिकानां सूत्राणां भाष्यमग्रे प्रणीतवान् ॥ ७६ ॥

ब्रह्मर्षयो ये तत्रासन् ब्रह्मविद्याविशारदाः ।
निर्मत्सराः सुनिपुणा गुणागुणविवेचने ॥ ७७ ॥

ते सर्वे च सभां कृत्वा प्रेक्ष्य तद्भाष्यमान्ततः ।
हर्षगद्गदया वाचा सुश्लाघमिदमूचिरे ॥ ७८ ॥

अहो भाष्यमहो भाष्यमहो अद्वैतभाष्यकृत् ।
अहो [1]प्रसादगाम्भीर्ये महाभाष्यादिहोद्गते ॥ ७९ ॥

क्व नु षोडशवर्षोऽयं क्व चेदं भाष्यमुत्तमम् ।
अथवा नाद्भुतमिदं सर्वज्ञेऽस्मिन् सदाशिवे ॥ ८० ॥

सूत्रार्थवर्णनेनेदं पदैः सूत्रानुकारिभिः ।
स्ववाक्यवर्णनेनापि भाष्यलक्षणलक्षितम् ॥ ८१ ॥

---

1. अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित् । षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात् ॥ इति ॥

इदमर्हति भाष्यत्वं नेतरद्भाष्यसंमितम् ।
अयं श्रुत्यन्तनिष्यन्दो मुमुक्षूणामिदं धनम् ॥ ८२ ॥

अलं गोप्तुमिदं वेदं नानादुर्मतिदूषितम् ।
अद्यैव सफलोद्योगो भगवान् बादरायणः ॥ ८३ ॥

उदयाद्रेः शंकराख्यादुदिते भाष्यभास्करे ।
सद्यो विलिलियिरे सर्वा द्वैतिदुर्वादिपेचकाः ॥ ८४ ॥

इति प्रशंसितगुणो गुणगृह्यैर्महात्मभिः ।
भूतार्थशंसनपरैर्विज्ञैः प्रोत्साहितो गुरुः ॥ ८५ ॥

स द्वादशोपनिषदां गीतादित्रितयस्य च ।
तेने भाष्यं मुमुक्षूणां पुण्यपुञ्जप्रचोदितः ॥ ८६ ॥

एवं श्रुतिस्मृतिन्यायप्रस्थानत्रितयस्य च ।
भाष्यषोडशकेनावीद्गुरुर्वेदांश्च वैदिकान् ॥ ८७ ॥

अध्यापयामास ततो भाष्यं शिष्टानुमोदितम् ।
स्वान् शिष्यानितरांश्चैव ये स्युस्तत्राधिकारिणः ॥ ८८ ॥

इत्थं तीर्थस्वफणितिसुधासारपूरैर्जनौघं
तीर्थीकुर्वन् सुरसरिदिवाघौघमग्नं प्रपन्नम् ।
काशीं शिष्यैः पुनरवतरंस्तीर्थपादाधिराजः
श्रेयो भूयः किमिति विमृशन्नास्त भाष्यप्रणेता ॥ ८९ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
श्रीभगवत्पादाभ्युदये भाष्यप्रणयनवर्णनं नाम
चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

---

अथ भागीरथीतीरे निवसन्मुक्तिमण्टपे ।
श्रीशारीरकमीमांसाभाष्यं नारायणाश्रमे ॥ १ ॥

पूर्वमुत्थापितं सम्यगपि तच्छ्रवणोत्सुकान् ।
पुनरध्यापयामास पद्मपादमुखान् गुरुः ॥ २ ॥

सुप्रसन्नतरं भाष्यं ते च सम्यग्विचक्षणाः ।
तथाऽप्यतिगम्भीरत्वात्तस्य गङ्गाप्रवाहवत् ॥ ३ ॥

उत्सुकत्वाच्च तत्सारं पातुं गुरुमुखाम्बुजात् ।
रसस्यायातयामत्वात्स्वादुत्वाच्च नवंनवम् ॥ ४ ॥

शृण्वतामपि शुश्रूषा जाता तेषामतृप्यताम् ।
भूरिवात्सल्यवान् सोऽपि मुहुस्तानध्यजीगपत् ॥ ५ ॥

कदाचिद्ब्रह्मसूत्राणि व्याचक्षाणे महागुरौ ।
व्याख्यासिंहासनारूढे शिष्यमण्डलमण्डिते ॥ ६ ।

आजगाम द्विजः कश्चिज्जराजर्जरिताङ्गकः ।
कम्पमानवपुः शुक्लकेशः कम्प्रमुखाङ्गुलिः ॥ ७ ॥

मन्दमन्दं चरन् यष्ट्या प्रस्खलंश्च पदे पदे ।
आगच्छन्नेव सोऽपृच्छत्के यूयं किमिदं सदः ॥ ८ ॥

किमत्र पठ्यते को वा ब्रूत पाठयितार्थतः ।
व्याससूत्राक्षराणीव श्रुतान्यद्याप्तगाणि वः ॥ ९ ॥

तथा चेद्ब्रह्मसूत्रार्थवक्ता कः कथ्यतामिति ।
सभाजयित्वा तं वृद्धं पद्मपादोऽभ्यभाषत ॥ १० ॥

इयं विद्यासभा ब्रह्मन् व्याख्यासिंहासने स्थितः ।
य एष सोऽस्मदाचार्यः शंकरो नाम योगिराट् ॥ ११ ॥

बादरायणसूत्राणामेष भाष्यं प्रणीतवान् ।
एतदेवातिगम्भीरमेते वयमधीमहि ॥ १२ ॥

स तदाकर्णयन्नुच्चैः प्रजहास जगाद च ।
अहो कालस्य वैषम्यमहो कलिविजृम्भितम् ॥ १३ ॥

सर्वं ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे ।
इत्यादिकमिदानीं तु वचः सत्यायितं बत ॥ १४ ॥

पारावारातिगम्भीरं शास्त्रं शारीरकं क्व नु ।
क्व चायं तस्य शास्त्रस्य भाष्यकर्ता स्तनंधयः ॥ १५ ॥

"मत्त ऐरावतो बद्धः सर्षपीकोणकोटरे ।
मशकेन कृतं युद्धं सिंहौघैरणुकोटरे ॥
पद्माक्षे स्थापितो मेरुर्निगीर्णो भृङ्गसूनुना ।"

---

* मत्त ऐरावणो बद्धः इत्याद्यर्धत्रयं महोपनिषदि चतुर्थाध्याये ।

इति वाक्यार्थसदृशं भाष्यप्रणयनं त्वया ।
यद्वाऽधिकरणे ब्रूत भाष्यं वो यत्र कुत्रचित् ॥ १६ ॥

श्रुत्वा ब्रूमः प्रयतनमिदं वः साध्वसाधु वा ।
कुत्राधिकरणे भाष्यं पठ्यतामित्युदीरयन् ॥ १७ ॥

पद्मपादस्तदन्तरप्रतिपत्ताविति स्थले ।
ब्रूहीत्युक्तः स तद्भाष्यं श्रावयामास तं द्विजम् ॥ १८ ॥

तदर्थं खण्डयामास बहुधा पूर्वपक्षकृत् ।
समादधे भाष्यकारस्तत्सर्वमुपपत्तिभिः ॥ १९ ॥

तत्प्रसङ्गेन संजज्ञे विवादः सुमहांस्तयोः ।
उभाभ्यामथ ताटस्थ्ये पद्मपादो व्यधीयत ॥ २० ॥

जीवभेदो जगज्जीवभेदो जीवेशयोर्भिदा ।
जगदीश्वरभेदश्च मिथो भेदो जगत्यपि ॥ २१ ॥

इति पञ्चविधं भेदं वास्तवं प्राह स द्विजः ।
एकविज्ञानतः सर्वविज्ञाननियमश्रुतेः ॥ २२ ॥

तदन्याधिकरणपर्यालोचनया भिदा ।
मिथ्या न वास्तवी वाचारम्भणश्रुतिशासनात् ॥ २३ ॥

इत्याद्युक्त्या पूर्वपक्षं निराचष्टे स्म देशिकः ।
आक्षेपान् कृतवान् भूयोऽप्यात्मानमधिकृत्य सः ॥ २४ ॥

विस्फुलिङ्गश्रुतेः सांशो जडः सुप्तावभानतः ।
दुःखित्वदर्शनाद्बद्धो वालाग्रत्वश्रुतेरणुः ॥ २५ ॥

बाल्याद्यवस्थाकालुष्याज्जीवात्मा हि विकारवान् ।
अनित्यश्चैव न प्रेत्य संज्ञेति श्रुतिशासनात् ॥ २६ ॥

इति द्वैतावलम्बेन पूर्वपक्षयति द्विजे ।
समाधत्त स्म सिद्धान्ती निरंशो निष्कलत्वतः ॥ २७ ॥

सांशत्वे तु विकारित्वानित्यत्वादि प्रसज्यते ।
अविकार्यत्वनित्यत्वबाधनात्तदसंगतम् ॥ २८ ॥

नास्यावस्थाकृतो दोषोऽप्यनन्वागतताश्रुतेः ।
न प्रेत्यान्यपरं वाक्यमविनाशित्वशासनात् ॥ २९ ॥

व्यापकोऽसौ विभुत्वोक्तेरणुत्वं स्यादुपाधितः ।
उत्थिते प्रत्यभिज्ञानाच्चेतनोऽसौ न वै जडः ॥ ३० ॥

दोषान् परिजहारैवं श्रुतियुक्त्यनुभूतिभिः ।
ततश्चैवं बहुविधमाक्षिपत्यति भूसुरे ॥ ३१ ॥

सर्वं समादधे चैष न्याय्याभिरुपपत्तिभिः ।
उत्तरोत्तरमित्येवं वाचोयुक्तिपटिष्ठयोः ॥ ३२ ॥

दिनाष्टकं व्यतीयाय तयोर्विवदमानयोः ।
तदन्तरे तु मतिमान् पद्मपादो व्यचिन्तयत् ॥ ३३ ॥

अयं न विप्रो यः कश्चित्कृष्णद्वैपायनो ध्रुवम् ।
नान्योऽभियोक्तुमीष्टेऽस्मद्गुरुं सिंहं यथा मृगः ॥ ३४ ॥

मन्ये ह्यनेन भाष्येण प्रीणितो बादरायणः ।
इति मत्वा कुशाग्रीयमतिस्तौ प्रणमन् जगौ ॥ ३५ ॥

[1]शंकरः शंकरः साक्षाद्व्यासो नारायणः स्वयम् ।
तयोर्विवादे संप्राप्ते किंकरः किंकरोत्यहम् ॥ ३६ ॥

इति सूचिततत्त्वार्थो भाष्यकारः ससंभ्रमम् ।
नमो भगवते सूत्रकारायेति ननाम तम् ॥ ३७ ॥

तावदेव तपोवह्निशिखांशुभिरिवोद्गतैः ।
जटाकलापैः कपिशैः पिशङ्गीकृतदिङ्मुखः ॥ ३८ ॥

भ्राजमानो यथा भानुरुदयाचलमूर्धगः ।
मुखेन सुप्रसन्नेन सोमवत्प्रियदर्शनः ॥ ३९ ॥

प्रशान्तात्मा घनश्यामो ददृशे स तपोधनः ।
तपोमयीं ज्ञानमयीं क्षान्तिदान्तित्रयीमयीम् ॥ ४० ॥

तनुं दधानं महसा सहस्रांशुमिवोज्ज्वलम् ।
प्रणम्य पुनरप्यूचे भगवन् भवताऽधुना ॥ ४१ ॥

इदं परीक्षतां भाष्यं मामकं साध्वसाधु वा ।
आचार्यहृदयं ज्ञातुं मनोबलवदुत्सुकम् ॥ ४२ ॥

---

1. शंकरः शंकर इत्यादिश्लोक आनन्दगिरीयः ।

इति पृच्छन्तमाचार्यमालिङ्ग्याह महामुनिः ।
जाने त्वां वेदरक्षार्थमवतीर्णं महेश्वरम् ॥ ४३ ॥

अद्यास्मि सफलोद्योगः सूत्रभाष्यकृता त्वया ।
मन्दानल्पायुषो लोकान्दुर्बलांश्च विदन् कलौ ॥ ४४ ॥

व्यास्थं सुविपुलान् वेदान् सुखग्रहणहेतवे ।
प्रायेण तत्र विमुखान् ब्रह्मबन्धूर्निशामय ॥ ४५ ॥

हन्ताद्वैतं श्रुतेरर्थं विपर्यस्यन्त्यनेकधा ।
ये वेदबाह्या जैनाद्या जैमिन्याद्यास्तदान्तराः ॥ ४६ ॥

लोकान् विप्रतिपन्नार्थान् विप्लुतार्थरुचीन्विदन् ।
ब्रह्मसूत्राण्यकरवं निर्धूताभासदर्शनम् ॥ ४७ ॥

तेषु प्रविश्य कुधियः प्रतिपाद्यार्थमन्यथा ।
सूत्रकारस्य हृदयमिदमेवेति वादिनः ॥ ४८ ॥

स्वयं विनष्टा यत्नेन नाशयन्तः परानपि ।
तिमिरे ताम्यतां हन्त कालिकां ससृजुः खलाः ॥ ४९ ॥

एवं वन्ध्योद्यमेऽनास्थां गते मयि महामते ।
दिष्ट्याऽद्य रक्षितं सत्यं शिक्षितं च तथेतरत् ॥ ५० ॥

प्रसाद्य ब्रह्मपरतामाम्नायानां समन्वये ।
क्रियापरत्वं वदतां मतं विद्वन्निराकरोः ॥ ५१ ॥

तथाऽऽनन्दमयः कार्यः यथाऽनं ब्रह्म पुच्छगम् ।
इत्यात्मनस्त्वया धीमन् साधिता निर्विशेषता ॥ ५२ ॥

एकस्योभयलिङ्गत्वासंभवात्सविशेषता ।
औपाधिकी निर्विशेषमतो ब्रह्मेति सुस्थितम् ॥ ५३ ॥

ममैव हृद्गता विद्या भाष्यरूपेण ते मुखात् ।
प्रवृत्ता दिव्यतटिनी यथा हिमवतः सुता ॥ ५४ ॥

सप्रशंसं भगवता व्यासेनेत्यनुमोदितः ।
प्रभुः परमहंसानां परिव्राजकशेखरः ॥ ५५ ॥

व्यासमभ्यर्थयामास भगवन् स्थीयतां क्षणम् ।
त्यजाम्यवसितायुष्ट्वात्तीर्थे वपुरिदं मम ॥ ५६ ॥

तदाकर्ण्य विहस्तेषु समस्तेषु मुनीश्वरः ।
मेघगम्भीरया वाचा हर्षयंस्तानभाषत ॥ ५७ ॥

नत्वाऽनुमन्ये योगीन्द्र प्रयान्तं कीर्तिशेषताम् ।
जेतव्या बहवो लोके सन्ति ह्यद्वैतशत्रवः ॥ ५८ ॥

अजितेषु हि तेषु स्याद्वन्ध्यमेवास्मदीहितम् ।
इतश्च षोडश समाः प्रदीयन्ते हि ते मया ॥ ५९ ॥

न हि मद्दर्शनं पुंसां जातु निष्फलतामियात् ।
मद्दत्तेनायुषाऽऽयुष्मन्मण्डनादीन् वशीकुरु ॥ ६० ॥

विजित्य द्वैतिनो धर्मः स्थाप्यतामित्युदीरयन् ।
व्यासस्त्वाकर्षयामास ब्रह्माणं सृष्टिकारणम् ॥ ६१ ॥

ब्रह्माऽप्यवादीदेवं हि स्वतन्त्रः शंकरं प्रभुः ।
दुष्टाचारविनाशाय प्रादुर्भूतो महीतले ॥ ६२ ॥

स एव शंकराचार्यः साक्षात्कैवल्यनायकः ।
यावदिच्छाब्दमुर्व्यां हि स्थित्वा पश्चाद्गमिष्यति ॥ ६३ ॥

इत्युक्त्वाऽन्तर्हितो ब्रह्मा व्यासश्च मिषतां नृणाम् ।
ततो मुमुदिरे सर्वेऽप्यायुर्वृद्ध्या महागुरोः ॥ ६४ ॥

तथेत्यगात्प्रयागं[1] स भट्टपादजिगीषया ।
यं कुमारिल इत्याहुः कुमारांशोद्भवं बुधाः ॥ ६५ ॥

शिष्योऽसौ जैमिनेः पूर्वं निर्ममे तन्त्रवार्तिकम् ।
प्रभाकरादयस्तस्य शिष्यास्तत्समनेजसः ॥ ६६ ॥

वासवांशे सुधन्वाख्ये भूपे बुद्धमतानुगे ।
तत्रस्थान् सौगतान् जित्वा वादेन च परीक्षया ॥ ६७ ॥

तान्विद्राव्य महीपालं वेदनिष्ठं व्यधात्सुधीः ।
तादृशः सुमहान् भट्टः कर्मपारम्यवाद्यसौ ॥ ६८ ॥

---

1. रुद्राख्यपुरे भट्टपाददर्शनमिति चिद्विलासीयादिषु ।
व्यासस्त्वाकर्षयामास इत्यादि आनन्दगिरीये ।

अवश्यमेव जेतव्य इति कृत्वा मतिं गुरुः ।
सिताऽसिताभिधे गङ्गायमुने यत्र संगते ॥ ६९ ॥

सरस्वत्याऽन्तर्वाहिन्या त्रिवेणीति च यं विदुः ।
यत्र भट्टस्य वसतिस्तं प्रयागमगाद्गुरुः ॥ ७० ॥

तत्र स्नानादिकं कृत्वा निर्वर्तितनिजक्रियः ।
सस्मार जननीं तीर्थमाहात्म्येन प्रसक्तधीः ॥ ७१ ॥

तां तदाऽऽसन्नमरणां निध्याय ध्यानचक्षुषा ।
सहसाकाशमार्गेण मातुरन्तिकमेयिवान् ॥ ७२ ॥

कृच्छ्रेण सा तमित्याह धन्यधन्याऽस्म्यहं त्वया ।
यन्मामभ्युपपन्नोऽसि मुमूर्षुं मातृगन्धिनीम् ॥ ७३ ॥

पुरस्तिष्ठ क्षणं यावन्मर्त्यनीडं जहाम्यहम् ।
मातुरुत्तमलोकार्थी सोऽपि तुष्टाव शंकरम् ॥ ७४ ॥

## शिवभुजङ्गप्रयातस्तोत्रम् ॥

गलद्दानगण्डं मिलद्भृङ्गषण्डं चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
लसद्दन्तकाण्डं विपद्भङ्गचण्डं शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥

अनाद्यन्तमाद्यं परं तत्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम् ।
हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महःशैवमीडे ॥ २ ॥

स्वशक्त्यादिशक्त्यन्तसिंहासनस्थं मनोहारि सर्वाङ्गरत्नादिभूषम् ।
जटाहीन्दुगंगास्थिशम्याकमौलिं परं शक्तिमित्रं नुमः पंचवक्त्रम् ॥

शिवेशानतत्पूरुषाघोरवामादिभिर्ब्रह्मभिर्हृन्मुखैः षड्भिरङ्गैः।
अनौपम्य षट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा।

प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहःश्याममर्धम्।
गुणस्यूतमेकं वपुश्चैकमन्तः स्मरामि स्मरापत्तिसंपत्तिहेतुम्॥ ५ ॥

स्वसेवासमायातदेवासुरेन्द्रा-
नमन्मौलिमंदारमालाभिषिक्तम्।
नमस्यामि शंभो पदाम्भोरुहं ते
भवाम्भोधिपोतं भवानीविभाव्यम्॥ ६ ॥

जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकंपिन्विपन्नार्तिहारिन्।
महःस्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु॥

महादेव देवेश देवादिदेव
स्मरारे पुरारे यमारे हरेति।
ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं
ततो मे दयाशील देव प्रसीद॥ ८ ॥

विरूपाक्ष विश्वेश विद्यादिकेश
त्रयीमूल शंभो शिव त्र्यम्बक त्वम्।
प्रसीद स्मर त्राहि पश्यावमुक्त्यै
क्षमस्वाप्नुही त्र्यक्ष मां रक्ष मोदात्॥ ९ ॥

त्वदन्यः शरण्यः प्रपन्नस्य नेति
प्रसीद स्मरन्नेव हन्यास्तु दैन्यम्।
न चेत्ते भवेद्भक्तवात्सल्यहानि-
स्ततो मे दयालो दयां संनिधेहि॥ १० ॥

अयं दानकालस्त्वहं दानपात्रं
भवान्नाथ दाता त्वदन्यं न याचे ।
भवद्भक्तिमेव स्थिरां देहि मह्यं
कृपाशील शंभो कृतार्थोऽस्मि तस्मात् ॥ ११ ॥

पशुं वेत्सि चेन्मां त्वमेवाधिरूढः
कलंकीति वा मूर्ध्नि धत्से त्वमेव ।
द्विजिह्वः पुनः सोऽपि ते कण्ठभूषा
त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः ॥ १२ ॥

न शक्नोमि कर्तुं परद्रोहलेशं
कथं प्रीयसे त्वं न जाने गिरीश ।
तथा हि प्रसन्नोऽसि कस्यापि कान्ता-
सुतद्रोहिणो वा पितृद्रोहिणो वा ॥ १३ ॥

स्तुतिं ध्यानमर्चां यथावद्विधातुं
भजन्नप्यजानन्महेशावलम्बे ।
त्रसन्तं सुतं त्रातुमग्रे मृकण्डो-
र्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ १४ ॥

अकण्ठे कलङ्कादनङ्गे भुजङ्गा-
दपाणौ कपालादभालेऽनलाक्षात् ।
अमौलौ शशाङ्कादवामे कलत्रा-
दहं देवमन्यं न मन्ये न मन्ये ॥ १५ ॥

इति स्तुवति योगीन्द्रे मुदिताः शिवपार्षदाः ।
आजग्मुः सविमानास्तं शिवलोकं निनीषवः ॥ ७५ ॥

त्रिशूलहस्तांस्तान् दृष्ट्वा जटिनः कृत्तिवाससः ।
भुजङ्गभूषणांस्त्र्यक्षान् त्रिभयामास सा भृशम् ॥ ७६ ॥

भीतां मातरमाश्वास्य सान्त्वनेन प्रयाप्य तान् ।
तुष्टाव स पुनर्योगी निनीषुस्तां हरेः पदम् ॥ ७७ ॥

## विष्णुभुजङ्गप्रयातस्तोत्रम् ॥

चिदंशं विभुं निर्मलं निर्विकल्पं
निरीहं निराकारमोंकारगम्यम् ।
गुणातीतमव्यक्तमेकं तुरीयं परं
ब्रह्म यं वेद तस्मै नमस्ते ॥ १ ॥

विशुद्धं शिवं शान्तमाद्यन्तशून्यं
जगज्जीवनं ज्योतिरानन्दमूर्तिम् ।
अदिग्देशकालव्यवच्छेदनीयं
त्रयीवर्ति यं वेद तस्मै नमस्ते ॥ २ ॥

महायोगपीठे परिभ्राजमाने
धरण्यादि सत्त्वात्मके शक्तियुक्ते ।
गुणाहस्करेन्द्वग्निबिम्बेन्दुमध्ये
समासीनमोंकर्णिकाष्टाक्षराब्जे ॥ ३ ॥

समानोदितानेकसूर्येन्दुकोटि-
प्रभापूरतुल्यद्युतिं दुर्निरीक्षम् ।
न शीतं न चोष्णं सुवर्णावदातं
प्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४ ॥

सुनासापुटं सुन्दरभ्रूललाटं
किरीटोचिताकुञ्चितस्निग्धकेशम् ।
स्फुरत्पुण्डरीकाभिरामायताक्षं
समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५ ॥

लसत्कुण्डलामृष्टगण्डस्थलान्तं
जपारुण्यचोराधरं चारुहासम् ।
अलिव्याकुलामोदमन्दारमालं
महोरःस्फुरत्कौस्तुभोद्दामहारम् ॥ ६ ॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डै-
श्चतुर्भिश्चलत्कङ्कणालंकृताग्रैः ।
उदारोदरालंकृतं पीतवस्त्रं
पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥ ७ ॥

स्वभक्तेषु संदर्शिताकारमेकं
सदा भावयन् संनिरुद्धेन्द्रियाश्वम् ।
दुरापं नरो याति संसारपारं
परस्मै परेभ्योऽपि तस्मै नमस्ते ॥ ८ ॥

श्रिया शातकुम्भद्युतिस्निग्धकान्त्या
धरण्या च दूर्वादलश्यामलाङ्ग्या ।
कलत्रद्वयेनामुना तोषिताय
त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥ ९ ॥

शरीरं कलत्रं सुतं बन्धुवर्गं
वयस्यं धनं सद्म भृत्यं भुवं च ।

समस्तं परित्यज्य हा कष्टमेको
गमिष्यामि दुःखेन दूरं किलाहम् ॥ १० ॥

जरेयं पिशाचीव हा जीवतो मे
मृजामस्थि रक्तं च मांसं बलं च ।
अहो देव सीदामि दीनानुकम्पिन्
किमद्यापि हन्त त्वयोदासितव्यम् ॥ ११ ॥

कफव्याहतोष्णोल्बणश्वासवेग-
व्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याहमन्त्यामचिन्त्यामवस्थां
बिभेमि प्रभो किं करोमि प्रसीद ॥ १२ ॥

लपन्नच्युतानन्त गोविन्द विष्णो
मुरारे हरे नाथ नारायणेति ।
यथाऽनुस्मरिष्यामि भक्त्या भवन्तं
तथा मे दयाशील देव प्रसीद ॥ १३ ॥

नमस्ते जगन्नाथ विष्णो नमस्ते
नमस्ते गदाचक्रपाणे नमस्ते ।
नमस्ते प्रपन्नार्तिहारिन् नमस्ते
समस्तापराधं क्षमस्वाखिलेश ॥ १४ ॥

मुखे मन्दहासं नखे चन्द्रभासं
करे चारुचक्रं सुरेशाभिवन्द्यम् ।
भुजङ्गे शयानं भजे पद्मनाभं
हरेरन्यदेवं न मन्ये न मन्ये ॥ १५ ॥

स्तुत्याऽनया सुप्रसन्नाः स्रग्विणः पीतवाससः ।
चतुर्भुजाः शङ्खचक्रधारिणो विष्णुपार्षदाः ॥ ७८ ॥

आगत्य तस्य जननीं बहुमानपुरःसरम् ।
विमानमधिरोप्यैनां निन्युर्विष्णोः परं पदम् ॥ ७९ ॥

तत्रत्येष्वथ विप्रेषु प्रेतसंस्कारकर्मणे ।
आहूतेष्वप्यनायातेष्वतिक्रुद्धो गुरुः स्वयम् ॥ ८० ॥

मातृहस्तात्सृजन्नग्निं मथितात्तत्कलेवरम् ।
दहंस्तत्रैवाशपंस्तान् द्विजांस्तद्देशवासिनः ॥ ८१ ॥

यदेवं स्वजने प्रेते तत्संस्कारेऽप्यनादराः ।
तद्ब्रह्मबन्धवो यूयं दुराचारा दुराशयाः ॥ ८२ ॥

शिष्टानामपरिग्राह्याः कर्मभ्रष्टा भविष्यथ ।
निजावासश्मशानाश्च यूयं स्वजनदूषकाः ॥ ८३ ॥

इति शप्त्वा गुरुर्भूयः प्रयागक्षेत्रमाययौ ।
यावत्स तत्र विधिवत्स्नात्वा शिष्यैः समागतः ॥ ८४ ॥

तावन्महान् भट्टपादस्तुषाग्निं प्रविशत्यहो ।
इत्यभूत्तुमुलः शब्दो नृणां तमनुशोचताम् ॥ ८५ ॥

आचार्योऽपि तदाकर्ण्य तद्देशं सत्वरं गतः ।
तं तुषाग्निपरीताङ्गं स्पृश्यमानं पदेऽग्निना ॥ ८६ ॥

प्रभाकरादिभिः शिष्यैः सर्वतः परिवारितम् ।
तदवस्थं निशाम्याशु समीपं प्राप्य देशिकः ॥ ८७ ॥

अहो महात्मन् किमिदमारब्धमिति चाब्रवीत् ।
शिष्यैर्विदित्वा तं योगिन् श्रूयतामित्युवाच सः ॥ ८८ ॥

अघवानस्मि बलवत्क्रियते तस्य निष्कृतिः ।
नान्यथा मे विशुद्धिः स्याच्छ्रूयतां यदि मन्यसे ॥ ८९ ॥

जेतुकामः पुरा बौद्धांस्तद्रहस्यं बुभुत्सया ।
तदन्तेवासितां बिभ्रत्तद्ग्रन्थानभ्यजीवयम् ॥ ९० ॥

एकदा तु सभामध्ये वेदे तैर्बहु निन्दिते ।
सहसा मम नेत्राभ्यामपतन्नश्रुबिन्दवः ॥ ९१ ॥

ततो निश्चित्य मां विप्रं सौगताः सौधशृंगतः ।
न्यपातयन्निष्करुणस्त्यक्ताहिंसाख्यसद्व्रताः ॥ ९२ ॥

यदि प्रमाणं वेदाः स्युस्ते मां पान्तु विपत्तितः ।
इत्याक्रोशं पतन्नुच्चैस्ततो मे न रुजाऽजनि ॥ ९३ ॥

क्षतजादि न मे किंचिच्चक्षुरेकं परागतम् ।
यदीति वेदप्रामाण्ये संदिग्धोक्तेः फलं नु तत् ॥ ९४ ॥

अहो श्रुतीनां महिमा यत्प्रत्ययबलादहम् ।
गोपायितोऽस्मि महतो मात्रैव विनिपाततः ॥ ९५ ॥

ततो वेदद्विषः सर्वान् सौगतान् सर्वमर्मवित् ।
विद्रावयामि निर्जित्य वादेन क्षितिपाश्रयः ॥ ९६ ॥

लब्ध्वैवं सौगताद्विद्यां तया तानेव घातयन् ।
ब्रूहि किं विदुषां श्रेष्ठ प्रायश्चित्तीयते न वा ॥ ९७ ॥

अयमेकोऽपराधो मे द्वितीयमपि मे शृणु ।
जैमिनीयमधीत्याहं शास्त्रं द्वादशलक्षणम् ॥ ९८ ॥

अत्यासक्तमनास्तस्मिन्नीश्वरास्तित्ववादिनीः ।
जानन्नपि श्रुतीर्दर्पान्नास्तिक्यं प्रत्यपादयम् ॥ ९९ ॥

एवं द्विधाऽऽत्मनि प्राप्तमघित्वं शोधयाम्यहम् ।
दिष्ट्या भवन्तमद्राक्षमद्य दुर्लभदर्शनम् ॥ १०० ॥

एतदेव परं मन्ये प्रायश्चित्तं यतीश्वर ।
क्व भवान् ब्रह्मविद्धुर्यो धूम्रतान्तः क्व चाप्यहम् ॥ १०१ ॥

महावाक्योपदेशेन मां कृतार्थय देशिक ।
अस्ति मण्डनमिश्राख्यो मच्छिष्यः कर्मणि स्थितः ॥१०२॥

तस्य भार्याऽपि विदुषी प्रख्यातोभयभारती ।
तां वाणीं विद्धि दुर्वासःशापान्मानुषतां गताम् ॥ १०३ ॥

धाताऽपि मण्डनो जातः प्रियाविश्लेषकातरः ।
विश्वरूप इति ख्यातो माहिष्मत्यां वसत्यसौ ॥ १०४ ॥

तं वशीकुरु वादेन मध्यस्थत्वे निधाय ताम् ।
त्वय्येकतानतां नीते तस्मिन् कृत्स्नं जगज्जितम् ॥ १०५ ॥

इति प्रपन्नं तं भट्टं महावाक्योपदेशतः ।
कृतार्थयित्वा भगवत्पादा माहिष्मतीमगुः ॥ १०६ ॥

इयदिति मुनिशाणोल्लीढमच्छं गुणाढ्यं
तिमिरहरमनर्घं भाष्यकृद्भाष्यरत्नम् ।
पदमहिममशोकं भट्टपादं स्वमात्रा
सममुपगमयन् सन्निर्ययौ दिग्जयार्थी ॥ १०७ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
श्रीभगवत्पादाभ्युदये श्रीव्यासानुग्रहादिवर्णनं नाम
पञ्चमः सर्गः ॥



# षष्ठः सर्गः ॥

अथ माहिष्मतीमेत्य सह शिष्यो यतीश्वरः ।
गृहं मण्डनमिश्रस्य पप्रच्छ पथि संगतान् ॥ १ ॥

ते प्राहुः शारिका यत्र विवदेरन् परस्परम् ।
स्वतः प्रमाणं किं किं वा प्रमाणं परतो भवेत् ॥ २ ॥

फलप्रदं किं नु कर्म किमुतेश्वर उच्यताम् ।
जगत्सत्यं नु मिथ्या वेत्येवमादि कुतूहलात् ॥ ३ ॥

द्वारस्था अनुयुञ्जीरन् अन्यानागन्तुकान् जनान् ।
सुगृहीताभिधानानां मिश्राणां विद्धि तद्गृहम् ॥ ४ ॥

तद्वाक्यं श्रवणानन्दं श्रावंश्रावं मुदा गुरुः ।
गच्छन् कवाटपिहितद्वारं तद्गेहमैक्षत ॥ ५ ॥

प्रविश्यान्तर्गृहं योगी सहसाऽऽकाशवर्त्मना ।
भ्राजमानं तमद्राक्षीद्द्वितीयमिव वेधसम् ॥ ६ ॥

परमर्षी स्वतपसा प्रीणितौ व्यासजैमिनी ।
श्राद्धे निमंत्र्य तत्पादाववनिज्यार्चनोन्मुखम् ॥ ७ ॥

स पूर्वोत्तरमीमांसाप्रणेतृभ्यां सभाजितः ।
विष्टरे स्वयमेकस्मिन्नासामास यतीश्वरः ॥ ८ ॥

काषायवसनं दण्डकमण्डलुपरिग्रहम् ।
देदीप्यमानं वपुषा वैश्वानरमिवौजसा ॥ ९ ॥

युवानमतिगम्भीरं सुप्रसन्नमुखांबुजम् ।
ज्वलन्तं ज्ञानशिखया ज्ञानयज्ञोपवीतिनम् ॥ १० ॥

तं विलोक्यैव सामर्षं क्षिपन् पप्रच्छ मण्डनः ।
वक्रोक्त्यैव यतीन्द्रोऽपि तस्य प्रत्युत्तरं ददौ ॥ ११ ॥

[1]कुतो मुण्ड्या गलान्मुण्डी पन्थास्ते पृच्छ्यते मया ।
किमाह पन्थास्त्वन्माता मुण्डेत्याह तथैव हि ॥ १२ ॥

पन्थानं त्वमपृच्छस्त्वां पन्थाः प्रत्याह मण्डन ।
त्वन्मातेत्यत्र शब्दोऽयं न मां ब्रूयादपृच्छकम् ॥ १३ ॥

अहो पीता किमु सुरा नैव श्वेता यतः स्मर ।
किं त्वं जानासि तद्वर्णमहं वर्णं भवान् रसम् ॥ १४ ॥

मत्तो जातः कलञ्जाशी विपरीतानि भाषसे ।
सत्यं ब्रवीति पितृवत्त्वत्तो जातः कलञ्जभुक् ॥ १५ ॥

कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ॥ १६ ॥

---

1. अत्र "कुतो मुण्डी इत्यादि जातः कलञ्जभुक्" इत्यन्तं पद्यजातं माधवीये "कन्थां वहसि" इत्यादि आनन्दगिरीये च वर्तमानमिति ज्ञेयम् ॥

कन्थां वहामि दुर्बुद्धे तव पित्राऽपि दुर्भराम् ।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति ॥ १७ ॥

“सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥ १८ ॥

ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥ १९ ॥

स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ।”
इति ब्रह्मोपनिषदं पण्डितंमन्य संस्मर ॥ २० ॥

[1]त्यक्त्वा पाणिगृहीतीं स्वामशक्त्या परिरक्षणे ।
शिष्यपुस्तकभारेच्छोऽर्याख्याता ब्रह्मनिष्ठता ॥ २१ ॥

गुरुशुश्रूषणात्तस्मात्समावर्त्य गुरोः कुलात् ।
स्त्रियः शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता ॥ २२ ॥

स्थितोऽसि योषितां गर्भे ताभिरेव विवर्धितः ।
अहो कृतघ्नता मूर्ख कथं ता एव निन्दसि ॥ २३ ॥

यासां स्तन्यं त्वया पीतं यासां जातोऽसि योनितः ।
तासु मूर्खतम स्त्रीषु पशुवद्रमसे कथम् ॥ २४ ॥

यः स्तनः पीतपूर्वस्तं निष्पीड्य मुदमश्नुते ।
यस्माज्जातो भगात्पूर्वं तस्मिन्नेव भगे रमन् ॥ २५ ॥

---

1 त्यक्त्वा पाणिगृहीतामित्यादि रमसे कथमित्यन्तं माधवीये ।

या माता सा पुनर्भार्या या भार्या मातृकैव हि ।
इति त्वं योगतत्त्वोपनिषदर्थं निभालय ॥ २६ ॥

इत्यादिभिर्दुरुक्तैस्तं क्रोधात्क्षिक्षेप कर्मठः ।
प्रतिचिक्षेप कर्मन्दी क्रोधमुद्दीपयन् शमी ॥ २७ ॥

तदन्तरे मुनीन्द्राभ्यां विनीतप्रार्थितो गृही ।
भिक्षार्थमर्थयामास वादं भिक्षुरभिक्षत ॥ २८ ॥

तथेति भिक्षां दत्त्वाऽस्मै श्राद्धं निर्वर्त्य मण्डनः ।
वादे युवाभ्यां माध्यस्थ्ये स्थेयमित्याह तौ मुनी ॥ २९ ॥

नन्वास्ते शारदा देवी गृहे तव विलासिनी ।
सा करिष्यति माध्यस्थ्यं वादे वामिति तौ गतौ ॥ ३० ॥

कृताह्निको यथान्येद्युस्तौ वादाय समुद्यतौ ।
साक्ष्ये निधाय तत्पत्नीमम्बामुभयभारतीम् ॥ ३१ ॥

प्रतिज्ञां चक्रतुस्तत्र भगवानाह शंकरः ।
ब्रह्म सत्यं जगन्मिथ्या भातीदं रज्जुसर्पवत् ॥ ३२ ॥

रज्जुज्ञाने यथा सर्पभ्रान्तिः सद्यो निवर्तते ।
तथैव ब्रह्मविज्ञानाद्द्वैतं तत्रैव लीयते ॥ ३३ ॥

सजातीयविजातीयस्वगताख्यभिदातिगम् ।
अखण्डैकरसं ब्रह्म सच्चिदानन्दविग्रहम् ॥ ३४ ॥

तज्ज्ञानेनैव मुक्तिः स्यात्कर्म त्वस्योपकारकम् ।
ज्ञानस्योत्पत्तये नास्य फले मोक्षे मनागपि ॥ ३५ ॥

अरणेर्मन्थनं वह्नेरुत्पत्तावुपकारकम् ।
नोत्पन्नस्य फलेऽप्यस्य दाहादौ च यथा तथा ॥ ३६ ॥

कर्मणा संस्कृतात्माऽथ ज्ञानेनामृतमश्नुते ।
एवं पूर्वोत्तरीभावसंबन्धः काण्डयोर्द्वयोः ॥ ३७ ॥

तत्र प्रमाणं वेदान्ता ह्येषोऽस्मन्मतसंग्रहः ।
पराजितः स्वां यद्यत्र भवांस्त्यक्त्वेममाश्रमम् ॥ ३८ ॥

पुनः संस्कारवान् भूत्वा तव शिष्यत्वमाप्नुयाम् ।
प्रतिजज्ञे मण्डनोऽपि कर्मैव श्रेयसे परम् ॥ ३९ ॥

साधनं न पुनर्ज्ञानं दुःखित्वस्यानिवर्तनात् ।
क्षुधितस्य भुजिज्ञानमात्रात्क्षुन्न निवर्तते ॥ ४० ॥

भुजिक्रियातः क्षुच्छान्तिर्विज्ञानं त्वप्रयोजकम् ।
तत्र प्रमाणमाम्नायास्ते तु कार्त्स्न्यात्क्रियापराः ॥ ४१ ॥

नाक्रियार्थोऽस्ति तद्भागः स्याच्चेत्स स्यादनर्थकः ।
मा भूदानर्थक्यमिति विधिवाक्यैकवाक्यताम् ॥ ४२ ॥

प्रतिपाद्यार्थवादानामर्थवत्त्वं समर्थितम् ।
इषेत्वेत्यादिवाक्यानां छेदनादिक्रियार्थता ॥ ४३ ॥

वाक्यान्तराणामप्येवं क्रियार्थत्वं हि साधितम् ।
इष्टे प्रवर्तयच्छास्त्रमनिष्टाच्च निवर्तयत् ॥ ४४ ॥

न भूतार्थपरं सप्तद्वीपा वसुमतीतिवत् ।
हेयोपादेयोपदेशविधुरस्य न शास्त्रता ॥ ४५ ॥

तत्त्वमस्यादिवाक्यानि कर्त्रादिस्तावकान्यतः ।
आवश्यकं हि गार्हस्थ्यमृणत्रितयशासनात् ॥ ४६ ॥

यावज्जीवश्रुतिबलान्नव्युत्थानं ततो भवेत् ।
अन्यथा वीरहत्यादि बहुदोषप्रसक्तितः ॥ ४७ ॥

पङ्ग्वन्धबाधिराद्या ये कर्मस्वनाधिकारिणः ।
तेऽधिक्रियन्तां संन्यासे न समर्था इति स्थितम् ॥ ४८ ॥

एषोऽस्मन्मतसिद्धान्तो यद्यत्र त्वां त्वया जितः ।
सद्यः संन्यसनं कृत्वा तव शिष्यत्वमाप्नुयाम् ॥ ४९ ॥

इत्थं संधां सुनिर्बन्धां कृत्वा कर्मन्दिकर्मठौ ।
चक्रतुः श्रुतिवाक्येषु बलाबलविचारणाम् ॥ ५० ॥

अनुल्लङ्घ्यतया भर्तृशिष्टेरुभयभारती ।
भूत्वा तटस्था द्वे माले तयोः कण्ठे निधाय च ॥ ५१ ॥

इयं माला यदा यस्य कण्ठस्था म्लायति स्वयम् ।
तदा स विजितो ज्ञेय इत्युक्त्वा गृहकर्मकृत् ॥ ५२ ॥

प्राप्ते मध्याह्नसमये भर्तारं बोधयत्यसौ ।
प्रदाय भिक्षेव भिक्षां भुज्यतां भवतेति च ॥ ५३ ॥

तौ कृतावश्यकौ वादमासायं कुरुतः पुनः ।
विवादे प्रचलत्येवं द्वयोराम्नायशूरयोः ॥ ५४ ॥

आजग्मुर्बहवो दिग्भ्यस्तदर्थश्रवणोत्सुकाः ।
मीमांसमानयोरेवं श्रुत्यर्थेषु बलाबलम् ॥ ५५ ॥

दिनानि षडतीतानि न विशेषोऽप्यदृश्यत ।
सप्तमेऽहनि संप्राप्ते वादे सति यथापुरम् ॥ ५६ ॥

मण्डनस्य गले माला म्लायति स्म न सा यतेः ।
ततः प्रणम्य सा देवी शारदेदमयाचत ॥ ५७ ॥

उभाभ्यामपि भिक्षुभ्यां भिक्षा स्वीक्रियतामिति ।
मालाग्लान्या तदुक्त्या च मत्वाऽऽत्मानं पराजितम् ॥ ५८ ॥

नमन्नुवाच शिष्यं मां गुरो शाधीति मण्डनः ।
तमुत्थाप्य गुरुः प्रेम्णा सश्लाघमिदमूचिवान् ॥ ५९ ॥

नूनं मण्डनमिश्र त्वं वेदवेदाङ्गपारगः ।
मेधावी प्रतिभावांश्च वाग्मी शूरश्च कर्मसु ॥ ६० ॥

शान्तिदान्तिप्रभृत्याऽसि संपन्नो दैवसंपदा ।
अर्हस्त्वं ब्रह्मविद्याया इति मे निश्चिता मतिः ॥ ६१ ॥

अतस्त्वत्संग्रहेऽस्माकं यत्नोऽयमिति निश्चिनु ।
गुणलुब्धस्य कौटिल्यस्येव राक्षससंग्रहे ॥ ६२ ॥

तदन्तरे यियासन्ती ब्रह्मलोकं वराङ्गना ॥ ६३ ॥

उवाच शारदा देवी तावाभाष्य यतीश्वरौ ।
अहं दुर्वाससः शापाद्ब्राह्मी जातास्मि मानुषी ॥ ६४ ॥

उक्तस्तेनैव शापान्तस्तादृश्यकरणावधिः ।
साऽहं निवृत्तशापाऽद्य गन्तुकामा स्वकं पदम् ॥ ६५ ॥

आपृच्छे वां यतिवराविति प्रस्थातुमुद्यता ।
अरण्यदुर्गामन्त्रेण तां निबध्याह शंकरः ॥ ६६ ॥

त्वया जितोऽस्मीति वद वादं वा कुरु शारदे ।
देवि त्वय्यजितायां मे कथं सर्वज्ञता भवेत् ॥ ६७ ॥

सा पुनः प्राह भो विद्वन् पत्यौ संन्यासमाश्रिते ।
असांप्रतं मही स्प्रष्टुमिति व्योम्नि स्थिताऽस्म्यहम् ॥६८॥

कथं वादो दिविष्ठाया भूमिष्ठेन त्वया भवेत् ।
दशाङ्गुलोन्नते व्योम्नि देवि तिष्ठति योगिना ॥ ६९ ॥

अभ्यर्थिता गामस्पृष्ट्वा तत्प्रेम्णा खे तथा स्थिता ।
ततः प्रववृते वादो भारतीपरहंसयोः ॥ ७० ॥

आम्नायेषु तदङ्गेषु तद्रहस्येषु सर्वशः ।
उपवेदेषु तन्त्रेषु न्यायवैशेषिकादिषु ॥ ७१ ॥

धर्मार्थशास्त्रयोः कात्स्न्यात्काव्यभैषज्ययोरपि ।
मन्त्रतन्त्रप्रयोगेषु सिद्धिष्वप्यणिमादिषु ॥ ७२ ॥

इतिहासपुराणेषु सांख्ययोगादिकेष्वपि ।
दिनानि सप्त दश च व्यतीतान्यविशेषतः ॥ ७३ ॥

अष्टादशेऽहनि प्राप्ते तं सुदुर्जयमन्यथा ।
मत्वा भगवती कामतन्त्रे प्रश्नानचोदयत् ॥ ७४ ॥

तस्मिन्निरुत्तरे तत्र सा जहास जगाद च ।
शृङ्गारो हि रसेष्वग्रयो विद्धि तं मम जीवितम् ॥ ७५ ॥

अतः सरसवाणीति मामुशन्ति मनीषिणः ।
यः शृङ्गारानभिज्ञस्तमनभिज्ञं विदांकुरु ॥ ७६ ॥

अनाघ्रायैव तद्गन्धं कथं मां विजिगीषसे ।
स तामाकर्ण्य गम्भीरां भारतीं भारतीरिताम् ॥ ७७ ॥

देवि व्युत्थितवानस्मि ब्रह्मचर्याद्विरक्तधीः ।
मन्यमानः सुखं फल्गु शारदे कामभोगजम् ॥ ७८ ॥

तदज्ञानेन सार्वज्ञ्यनूनतां यदि मन्यसे ।
मासमात्रं प्रतीक्षस्व देवि प्रत्युत्तराय ते ॥ ७९ ॥

इति मन्दप्रतिष्ठासां तां विधाय सुरेश्वरम् ।
अमन्दबोधं विदधे श्रुत्यन्तार्थविनिर्णये ॥ ८० ॥

इत्थं विनीय गुरुराडथ विश्वरूपं
स्वात्मावबोधयुतकर्मपरत्वमोहम् ।
सर्वज्ञपीठमधिरोढुमनाः प्रतस्थे
तत्राभ्युपायमनघं सगणो विचिन्वन् ॥ ८१ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
**श्रीभगवत्पादाभ्युदये सुरेश्वरलाभवर्णनं नाम**
षष्ठः सर्गः ॥



---

चिद्विलासीये तु सर्वज्ञपीठारोहणकथाऽन्यथा हि वर्ण्यते । श्रीकाञ्च्यां श्रीकामाक्षीसंनिधौ श्रीचक्रप्रतिष्ठापनानन्तरं सर्वज्ञपीठमारुरुक्षन्नाचार्यः "कृत्वा प्रसङ्गं विद्वद्भिर्जित्वा तानखिलानपि । सर्वज्ञपीठमारोढुमुचितं ननु भूतले ॥" इत्यशरीरिण्या वाण्या निवद्धोऽभूत् । ततस्ताम्रपर्णीतिरादागतान् विदुषो विजित्य तदनुमोदितः श्रीकाञ्च्यां सर्वज्ञपीठमारुरोहेति ।

# सप्तमः सर्गः ॥

स गत्वा दूरमध्वानं सङ्गीभूय पथि कचित् ।
जनौघान् शोचतो वीक्ष्य कारुण्येन प्रवर्तितः ॥ १ ॥

पृच्छन् शोकनिदानं तैः प्रत्यवादि यतीश्वरः ।
अमृताख्यं पुरं स्वामिन् रक्षन्नमरुकाभिधः ॥ २ ॥

राजाऽऽखेटप्रसक्तः सन्मृतोऽकस्माद्वनान्तरे ।
न मृतेर्लक्ष्यते लिङ्गं वर्तते ह्येष सुप्तवत् ॥ ३ ॥

दीर्घनिद्रामसौ प्राप्त इत्येव भिषजां मतम् ।
तस्येमा ललनाः सर्वा रूपेणाप्सरसां समाः ॥ ४ ॥

मदोत्कटेन करिणा लता इव सुपुष्पिताः ।
दुर्विदग्धेन विधिना क्षणादुन्मूलिताः शतम् ॥ ५ ॥

अप्युज्जीवयितुं शक्यं भगवन् भवता नृपः ।
भाग्यान्मृत्युंजयं प्राप्तं त्वां हि मन्यामहे वयम् ॥ ६ ॥

तथा प्रसीदतु भवानिति तत्पादयोर्जनाः ।
न्यपतन् सोऽपि तानाह निष्पन्नात्मप्रयोजनः ॥ ७ ॥

भो भो मा भैष्ट नृपतिर्न मृतः किं तु मूर्छितः ।
मुहूर्तं रक्षत नृपं ततो जीविष्यति स्वयम् ॥ ८ ॥

इत्युक्त्वा स ययौ तेऽपि प्रतीक्षन्ते स्म तद्गिरा ।
अथावेक्ष्य गिरिं नातिदूरे तस्य गुहां विशन् ॥ ९ ॥

रक्षतेदं शरीरं मे मासमात्रमतन्द्रिताः ।
तावद्राज्ञः शरीरेण साधयित्वा समीहितम् ॥ १० ॥

शीघ्रमेष्याम्यहमिति पद्मपादमुखान् स्वकान् ।
संदिश्य स्वां जीवकलामणवीं योगेन निर्हरन् ॥ ११ ॥

शिष्यसंरक्षितवपुः प्राविशन्नृपतेर्वपुः ।
अथ सुप्तोत्थवद्राजन्युत्तिष्ठति मुदाऽन्विताः ॥ १२ ॥

प्रायश्चित्तादिभिः पूतं तममात्याः समं जनैः ।
पुरे महोत्सवोपेते निन्युस्ते राजमन्दिरम् ॥ १३ ॥

अथ सिंहासनारूढः शशास वसुधां विभुः ।
मनुप्रभृतिमान्यानां मर्यादामनुपालयन् ॥ १४ ॥

दानमानादिभिः सर्वाः प्रजावद्रञ्जयन् प्रजाः ।
यथा हि पूजयामास प्रतीक्ष्यान् संप्रतीक्षया ॥ १५ ॥

शास्त्रज्ञांश्चार्हयामास ज्ञाततत्तत्परिश्रमः ।
बहु मेने च सश्लाघं कलासु सुविचक्षणान् ॥ १६ ॥

अन्तःपुरे तु वनिता रमयन् रतिपण्डितः ।
मनांस्यावर्जयामास कामोद्दीपनविभ्रमैः ॥ १७ ॥

ताश्च तत्तद्रसासक्ता नास्मार्षुर्विषयान्तरम् ।
एवं प्रजार्थे राज्यार्थे विद्यार्थेऽर्थे च मान्मथे ॥ १८ ॥

चतुर्धा चातुरी तस्य प्रत्येकमतिशायिनी ।
नासीदेवं पुरा राजा मृतप्रत्यागतो यदा ॥ १९ ॥

तदा प्रभृत्यसावेवमद्भुताद्भुतचेष्टितः ।
मतिः सर्वप्रवीणाऽस्य न विद्मस्तत्र कारणम् ॥ २० ॥

इति प्रवादः समभूत्पुरे चान्तःपुरे समम् ।
कदाचिद्राजमहिषी प्राज्ञा कनकमञ्जरी ॥ २१ ॥

अमात्यमुख्यमाहूय रहस्येनमवोचत ।
वेत्स्येवास्मत्प्रभोश्चेष्टां प्राक्तनीं चाधुनातनीम् ॥ २२ ॥

उभयोः सिंहशशवदन्तरं महदन्तरम् ।
पत्युश्छन्दानुरोधेन भोगेच्छाऽऽसीत्पुरा मम ॥ २३ ॥

साहमस्म्यधुना तात सततं भोगलालसा ।
राज्ञोपच्छन्दिताः प्राग्या रत्यर्थं चाटुकारिणा ॥ २४ ॥

तास्त्वद्य कलहायन्ते ह्यहंपूर्विकया रतौ ।
तन्नैषोऽमरुको राजा गतस्तु गत एव सः ॥ २५ ॥

किमप्यत्यद्भुतं सत्त्वं सर्वशक्तिसमन्वितम् ।
स्वैरमाविश्य तद्देहमेवं खेलत्यसंशयम् ॥ २६ ॥

अहो भाग्यमहो भाग्यमस्य लाभो यदद्य नः ।
मरीचिकायां भ्रमतः पिपासोरमृतागमः ॥ २७ ॥

तदेतस्य यथा वृत्तिरत्रैव स्यात्तथा कुरु ।
स चाह तां महाराज्ञि श्रूयतां किंचिदद्भुतम् ॥ २८ ॥

खिलीभूतो मनोः पन्थाः पुनरद्य परिष्कृतः ।
कालस्य कारणं राजेत्येतदद्य स्फुटीकृतम् ॥ २९ ॥

गुण्यमेतत्कृतयुगं विदुर्लोका न वै कलिम् ।
अद्यानुधावते नीतिर्धर्मं साध्वीपतिं यथा ॥ ३० ॥

धर्मोऽतिप्रीतिमान्नीतौ दयितायामिव प्रियः ।
वात्सल्यवन्तौ तौ कामे स्वतोके दम्पती इव ॥ ३१ ॥

नातिक्रामति तौ कामः सुपुत्रः पितराविव ।
मोक्षमार्गे त्रयोऽप्येते स्वामिनीवोपजीविनः ॥ ३२ ॥

गुणीभूय प्रवर्तन्ते राघवे भरतादिवत् ।
लोकेष्वल्पेन कालेन स्वस्वधर्मैकवृत्तिषु ॥ ३३ ॥

दण्डाधिकारः संवृत्तो नीतये न विनीतये ।
नूनमेष महायोगी साक्षादीश्वर एव वा ॥ ३४ ॥

तदस्य संग्रहोऽवश्यं कार्यो राष्ट्रस्य वृद्धये ।
इत्यावेद्यान्तपालं स सचिवोऽशादुपह्वरे ॥ ३५ ॥

राष्ट्रं विचीयतां दूतैः कृत्स्नं सगिरिकाननम् ।
यत्र कुत्रापि दृष्टं चेच्छरीरं मृतकोपमम् ॥ ३६ ॥

सपद्येव तदाहृत्य वह्निसात्क्रियतामिति ।
ते तथेति विचिन्वन्तो गुहायां वीक्ष्य तत्तनुम् ॥ ३७ ॥

रक्षिणस्तानसत्कृत्य जवात् सचिवशासनात् ।
चितामारोप्य ते देहं वह्निना तमदीपयन् ॥ ३८ ॥

पद्मपादादयस्तूर्णमत्याहितसमाकुलाः ।
राजदेहप्रतिच्छन्नं तदासन्नात्ममादिनम् ॥ ३९ ॥

कान्तामण्डलमध्यस्थं तौर्यत्रिकनिषेविणम् ।
लब्धप्रवेशाः कथमप्यन्तर्गायकदम्भतः ॥ ४० ॥

गीतिच्छलेन स्वगुरुं बोधयामासुरातुराः ।
न त्वं देहो न च प्राणो न धीर्नाक्षाणि नो तमः ।
सर्वाधिष्ठानभूतं यद्राजंस्तत्त्वमसि स्मर ॥ ४१ ॥

न त्वं जाग्रन्न ते जाग्रन्न स्वप्नो न सुषुप्तकम् ।
निर्विकारं तुरीयं यद्राजंस्तत्त्वमसि स्मर ॥ ४२ ॥

न त्वं राजा न ते राष्ट्रं न ते कान्ता न ते धनम् ।
सर्वोपाधिविमुक्तं यद्राजंस्तत्त्वमसि स्मर ॥ ४३ ॥

न ते स्थूलं न ते सूक्ष्मं न च ते कारणं वपुः ।
अशरीरमसङ्गं यद्राजंस्तत्त्वमसि स्मर ॥ ४४ ॥

राजपुत्रो मातृवाक्याद्वेद स्वं सङ्गविस्मृतम् ।
आप्तवाक्यात्तथाऽऽत्मानं राजंस्तत्त्वमसि स्मर ॥ ४५ ॥

स्वतोऽन्यतो वा विश्लिष्टः पुनरेयात्स्वकं पदम् ।
गान्धारवत्ताद्धि दार्ढ्यं राजंस्तत्त्वमसि स्मर ॥ ४६ ॥

त्वं हंसः परमः पद्मपादन्यासविहारभृत् ।
कथं गृध्रेषु रमसे राजंस्तत्त्वमसि स्मर ॥ ४७ ॥

प्रमादहेतुः प्रमदा सुग्रीवो यत्सुधीरपि ।
विसस्मार स्वसमयं राजंस्तत्त्वमसि स्मर ॥ ४८ ॥

राजवेषे न राजा स्यान्न भृत्यो भृत्यवेषभृत् ।
प्रत्यापत्तिर्हि कार्यान्ते राजंस्तत्त्वमसि स्मर ॥ ४९ ॥

गुहाहितं सुदुष्प्रापं पदं सर्वज्ञतापदम् ।
शीघ्रमभ्युपपत्तव्यं राजंस्तत्त्वमसि स्मर ॥ ५० ॥

इति संस्मारितो गीतिच्छलेन बुबुधे स्वयम् ।
आत्मानं परमं हंसं सर्वज्ञत्वार्थमुद्यतम् ॥ ५१ ॥

गुहान्यस्तं शरीरं स्वं पद्मपादादिरक्षितम् ।
राजदेहप्रवेशं च योषित्सङ्गेन विस्मृतिम् ॥ ५२ ॥

जेतव्यायाः शारदायाः कालातिक्रमणं तथा ।
संस्मृताखिलवृत्तान्तः सद्यः संजातसंभ्रमः ॥ ५३ ॥

निद्राच्छलादुज्जिहानो राजदेहाद्गुहान्तरम् ।
अनालक्ष्य वपुस्तत्र विचिन्वन्दिक्षु सर्वतः ॥ ५४ ॥

कचिद्रक्ष्यमाणैः स्वैः समन्तात्परिवारिताम् ।
चितास्थां स्वां तनूं स्पृष्टां वामाङ्गुष्ठ कृशानुना ॥ ५५ ॥
प्रविश्यास्तौन्नरहरिं प्रपन्नार्तिहरं यतिः ।

॥ श्रीलक्ष्मीनृसिंहस्तुतिः ॥

श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगीशभोगिमणिराञ्जितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १ ॥

ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि
संघट्टिताङ्घ्रिकमलारुणकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ २ ॥

संसारघोरगगने चरतो मुरारे
मारोग्रभीकरमृगप्रवरार्दितस्य ।
आर्तस्य मत्सरनिदाघनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ ३ ॥

संसारकूपमतिघोरमगाधमूलं
संप्राप्य दुःखशतसर्पसमाकुलस्य ।
दीनस्य देव कृपणापदमागतस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ४ ॥

संसारसागरविशालकरालकाम-
नक्रग्रहग्रसननिग्रहविग्रहस्य ।
व्यग्रस्य रागरसनोर्मिनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ५ ॥

संसारवृक्षमघबीजमनन्तकर्म-
शाखाशतं करणपत्रमनङ्गपुष्पम् ।
आरुह्य दुःखफलितं पततो दयालो
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ६ ॥

संसारसर्पघनवक्त्रभयोग्रतीव्र-
दंष्ट्राकरालविषदग्धविनष्टमूर्तेः ।
नागारिवाहन सुधाब्धिनिवास शौरे
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ७ ॥

संसारदावदहनातुरभीकरोरु-
ज्वालावलीभिरतिदग्धतनूरुहस्य ।
त्वत्पादपद्मसरसीशरणागतस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ८ ॥

संसारजालपतितस्य जगन्निवास
सर्वेन्द्रियार्थबडिशार्थझषोपमस्य ।

प्रोत्खण्डितप्रचुरतालुकमस्तकस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ९ ॥

संसारभीकरकरीशकराभिघात-
निष्पिष्टमर्मवपुषः सकलार्तिनाश ।
प्राणप्रयाणभयभीतिसमाकुलस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १० ॥

अन्धस्य मे हतविवेकमहाधनस्य
चोरैः प्रभो बलिभिरिन्द्रियनामधेयैः ।
मोहान्धकूपकुहरे विनिपातितस्य
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ ११ ॥

लक्ष्मीपते कमलनाभ सुरेश विष्णो
वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष ।
ब्रह्मण्य केशव जनार्दन वासुदेव
लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १२ ॥

इति स्तुत्या सुप्रसन्नो भगवान् भक्तवत्सलः ॥ ५६ ॥

स्वात्पतन्त्या विष्णुपद्या शमयन् जातवेदसम् ।
आविश्चकार स्वं रूप स्तंभादिव दिवःपतन् ॥ ५७ ॥

उत्थाय प्रणमन्तं तं प्रह्लादमिव योगिनम् ।
आपादमस्तकं स्पृष्ट्वा पाणिनाऽमृतवाहिना ॥ ५८ ॥

तमोमुक्तमिवादित्यं भ्राजमानं स्वतेजसा ।
समीहितस्य शेषं च साधयेति ययौ हरिः ॥ ५९ ॥

ततः प्रहर्षविवशैर्मण्डितः शिष्यमण्डलैः ।
तमागात्स पुनर्देशं यत्र सोमयभारती ॥ ६० ॥

दत्तोत्तरा सा चोद्यानां कामतन्त्रे निरर्गलम् ।
विस्मिताव्रीडिता चासीत्स प्रशंसं शशंस च ॥ ६१ ॥

जाने त्वामहमीशानं सर्वविद्याधिनायकम् ।
अवतीर्णं क्रतुभुजां याच्ञया धर्मगुप्तये ॥ ६२ ॥

ज्ञानं सर्वपथीनं ते मनीषिन् जगतीतले ।
दिदर्शयिणा सेयं परीक्षाद्य कृता मया ॥ ६३ ॥

त्वमेव त्वत्समो नान्यः सर्वज्ञ यतिशेखर ।
अनुजानीहि मां ब्रह्मन् ब्रह्मलोकसमुत्सुकाम् ॥ ६४ ॥

गुरुरप्याह तां प्रीतः स्वस्ति तेऽस्तु विधिप्रिये ।
देवि त्वां शृङ्गगिर्यादिविद्यास्थानेषु शारदे ॥ ६५ ॥

मोहान्धकारद्युमणिमाराधयिषाम्यहम् ।
तत्र तत्र प्रसन्ना त्वं सांनिध्यं कर्तुमर्हसि ॥ ६६ ॥

इति संप्रार्थिता विश्वजनीनोदय शंकर ।
कार्येऽस्मिन् लोकभूत्यर्थे भागिन्यस्मि भवानिव ॥ ६७ ॥

---

अनन्तानन्दगिरीये तु सरसवाणीं जितां मन्त्रेण निबध्य तया सहैव शृङ्गगिरिं गतवानाचार्य इति ।

तदलं बहु मां प्रार्थ्य भवान् खल्वाधिकारिकः ।
मां तु सर्वात्मना विद्धि तव च्छन्दानुवर्तिनीम् ॥ ६८ ॥

इत्युदीर्य गिरां देवी सहसाऽदृश्यतां गता ।
सोऽपि सर्वज्ञतामेवं लब्ध्वा मण्डनमब्रवीत् ॥ ६९ ॥

यथा सुरेश्वरो ब्रह्मा सर्वविज्ञानशेवधिः ।
तथा त्वमसि तेन त्वां वदिष्यन्ति सुरेश्वरम् ॥ ७० ॥

इति नाम च संन्यासं प्रदायास्मै यथाविधि ।
उपदिश्यातिगोप्यार्थं महावाक्यचतुष्टयम् ॥ ७१ ॥

मुख्येषु पद्मपादादिशिष्येष्वन्यतमं व्यधात् ।
सुरेश्वरोऽपि निध्याय तस्यास्तस्य च वैभवम् ॥ ७२ ॥

आत्मानं कृतिनं मेने तल्लाभादाश्रमद्वये ।
वशीकृतायां भारत्यां मण्डने च वशीकृते ॥ ७३ ॥
दुर्मतध्वंसनं कृत्यशेषं मेने महागुरुः ।

उप्त्वा बीजमनुत्तमं श्रुतिशिरोऽखण्डार्थबोधात्मकं
कृत्वा चाङ्कुरितं फलेग्रहितया संवर्धयिष्यन् विभुः ।
रक्षन् द्वीतिवराहसैरिभमुखात्सस्यादयूथाज्जवा-
दाशां कुंभजपालितां प्रति ययौ शिष्यः सुरेशादिभिः ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
**श्रीभगवत्पादाभ्युदये सर्वज्ञपीठारोहणवर्णनं नाम**
**सप्तमः सर्गः ॥**

# अष्टमः सर्गः ॥

ततः प्रियतमं शम्भोः श्रीशैलं प्राप्य शङ्करः ।
वराहनद्यां स्नानादि वर्तयित्वा सहानुगः ॥ १ ॥

आरुह्य शिखरं तस्य मेरुशृङ्गमिवोन्नतम् ।
भ्रमराम्बासहचर प्रणाभीष्टदायकम् ॥ २ ॥

श्रीमल्लिकार्जुनं देवं नत्वा तुष्टाव भक्तितः ।
ततः पाशुपतान् वीरशैवान्माहेश्वरानपि ॥ ३ ॥

वैष्णवांश्च यतीन्द्रेण प्रत्यवस्थातुमागतान ।
तन्त्रैकशरणान् वेदबाह्यान भाषाप्रमाणकान् ॥ ५ ॥

सुरेश्वरादयः शिष्या वेदैकप्रवणान् व्यधुः ।
तत्र कापालिकः कश्चिद्वादे जेतुमशक्नुवन् ॥ ५ ॥

छद्मना हन्तुकामस्तं शिष्यभावेन संश्रितः ।
कदाचिच्छिष्यवर्गेषु बहिर्यातेषु दुर्मतिः ॥ ६ ॥

प्रणम्य गुरुमेकान्ते साभ्यर्थनमयाचत ।
पुराऽहं तपसोग्रेण प्रीणयित्वा कपालिनम् ॥ ७ ॥

आविर्भूतं प्रसन्नं तं वरं याचितवानिमम् ।
स्वशरीरेण कैलासं प्राप्तुं पर्युत्सुकं मनः ॥ ८ ॥

तथा मयि कृपासिन्धो प्रसीद भगवन्निति ।
स चाह यदि मल्लोकं स्वदेहेनाप्तुमिच्छसि ॥ ९ ॥

शीर्षोपहारेणेष्ट्वा मां समीहितमवाप्नुहि ।
सम्राजः शिरसा कार्यं परिव्राजोऽथ वा भवेत् ॥ १० ॥

इत्युक्त्वान्तर्हितो देवस्ततःप्रभृति मे मनः ।
कैलासशिखरे भ्राम्यन्नाद्यापि विनिवर्तते ॥ ११ ॥

यदि शिष्ये मयि प्रीतो यद्यर्थित्वपराङ्मुखः ।
तदा गुरो ममोत्कण्ठां प्रपूरयितुमर्हसि ॥ १२ ॥

इति नत्वा याचमानं क्षुरप्रहृदयं शठम् ।
जानन्नपि मनस्येवमकरोत्स महामनाः ॥ १३ ॥

नूनं जिह्मस्वभावोऽयं तथाप्यभ्यर्थितोऽस्म्यहम् ।
अभ्यर्थितप्रदानं हि महापुरुषलक्षणम् ॥ १४ ॥

दधीचिर्भगवानस्थि विबुधेभ्योऽर्थितो ददौ ।
कर्णः स्वकवचादीनि जानन्निन्द्राय दत्तवान् ॥ १५ ॥

औशीनरस्तु श्येनाय स्वामुत्कृत्य ददौ तनुम् ।
एवमन्ये च बहवो राजन्ते कीर्तिवर्ष्मणा ॥ १६ ॥

इति निश्चित्य योगीन्द्रः कापालिक शिरो मम ।
तुभ्यं ददामि तेनेष्ट्वं साधयेति वदन् शमी ॥ १७ ॥

प्राणादीन्मूर्ध्नि संयम्य निष्कम्पः स्थाणुवत्स्थितः ।
ततः स पापो निशितं खड्गं स्वहृदयोपमम् ॥ १८ ॥

कोशादाकृष्य तरसा तदन्तिकमुपागमत् ।
सनन्दनस्तु तत्कर्म निध्याय ध्यानचक्षुषा ॥ १९ ॥

नृसिंहं मनसा दध्यौ प्रसादितमहोबलम् ।
सोऽप्याविवेश तस्यान्तः स्तम्भादिव कृतत्वरः ॥ २० ॥

तदाविष्टः स चोत्पत्य निपपात तदन्तरे ।
तत्करात्खड्गमाच्छिद्य तस्यैव शिर आहरत् ॥ २१ ॥

स पापो निपपातोर्व्यां हिरण्यकशिपुर्यथा ।
एवं महात्मसु द्रोहः प्रयुक्तोऽल्पोऽपि कल्पते ॥ २२ ॥

स्वनाशायाश्मनिक्षिप्तलोष्टवत्किं पुनर्महान् ।
आचार्यस्तु सपद्येवमुग्रं नरहरिं स्तवैः ॥ २३ ॥

शमयित्वा स्वशिष्यस्य भक्त्युत्कर्षेण विप्रिये ।
ततः स तुङ्गभद्रायास्तटप्रान्तमुपागतः ॥ २४ ॥

तत्र पूर्वं महानासीन्मुनिर्नाम्ना विभाण्डकः ।
तपस्यतोऽस्य विघ्नार्थमूर्वशी वासवेरिताम् ॥ २५ ॥

विलोक्य क्षुभितस्याशु वीर्यं चस्कन्द पाथसि ।
तत्पीत्वर्श्यमृगी साम्बु गर्भिणी सुषुवे सुतम् ॥ २६ ॥

एकशृङ्गं नरं तस्मादृश्यशृङ्गोऽभवन्मुनिः ।
सोऽङ्गदेशं सुवृष्ट्याऽऽनीद्दुर्ग्रवर्षपविग्रन्थतः ॥ २७ ॥

इष्ट्याऽपत्यप्रतीबन्धादपाद्दशरथं नृपम् ।
मुनेस्तस्य निवासेन पावनं तत्तपोवनम् ॥ २८ ॥

तन्नाम्ना शृङ्गगिर्याख्यो देशः सगिरिकाननः ।
यत्र सत्त्वानि शान्तानि वैरीण्यपि निसर्गतः ॥ २९ ॥

काकोलूकं केकिनागं गोतरक्ष्वोतुमूषकम् ।
एवमादीनि निर्मुक्तवैराणीत्येव नाद्भुतम् ॥ ३० ॥

छिन्दन्ति स्वेष्विव मिथो दयन्ते च विपत्तिषु ।
आगच्छंस्तत्र सोऽपश्यच्छालूरीं प्रसवोन्मुखीम् ॥ ३१ ॥

आश्वासयन्तमुरगं निवार्य फणयाऽऽतपम् ।
समीक्षमाणस्तद्वृत्तं गुरुः स्वानाह विस्मितः ॥ ३२ ॥

अहो पश्यत माहात्म्यमृश्यशृङ्गमहामुनेः ।
यदयं भेदभुग्भेकीमातामभ्युपपद्यते ॥ ३३ ॥

सुप्रशान्तोऽत्र नियतं यत्किंचित्सुकृतं कृतम् ।
फलत्यमोघं सुक्षेत्रे बीजमुप्तमिवानघम् ॥ ३४ ॥

तदत्रैव विधातव्यं निधानं श्रेयसो नृणाम् ।
कार्यमध्यवसायैवं गुरुस्तद्देशभूभृता ॥ ३५ ॥

मलहानिकराख्यस्य लिङ्गस्य सविधे व्यधात् ।
सुविशालं मठं रम्यं यजुर्वेदप्रधानकम् ॥ ३६ ॥

स्मरणात्कृतसांनिध्यां तत्र संस्थाप्य शारदाम् ।
शारदामठ इत्येव नाम चक्रे विशारदः ॥ ३७ ॥

पूर्वस्यां भैरवं देवमुत्तरस्यां च कालिकाम् ।
दक्षिणस्यां महादुर्गां प्रतीच्यां दिशि मारुतिम् ॥ ३८ ॥

प्रतिष्ठाप्य समास्तत्र द्वादशोवास देशिकः ।
व्याख्यासिंहासनाधीशं कृत्वा तत्र सुरेश्वरम् ॥ ३९ ॥

चन्द्रमौलीश्वरं देवं रत्नगर्भगणाधिपम् ।
पूजयेमावुभौ देवौ शारदां च यथाविधि ॥ ४० ॥

इत्यर्पयित्वा जगतीमज्ञानतिमिराहताम् ।
अध्यात्मविद्यया ज्योतिर्मयीं कर्तुममन्यत ॥ ४१ ॥

गुरुभक्त्याऽथ विद्यायाः साफल्याय समुत्सुके ।
भाष्यव्याख्याकृतेऽनुज्ञां याचमाने सुरेश्वरे ॥ ४२ ॥

दत्तानुमतिराचार्यः पद्मपादैकभक्तिभिः ।
चित्सुखाद्यैः शिष्यवर्गैः प्रणम्यावेद्युपह्वरे ॥ ४३ ॥

सर्वतन्त्रस्वतन्त्रोऽयं सुरेशो नात्र संशयः ।
किं तु कर्मपरोभूत्वा जितो ब्रह्मणि वर्तते ॥ ४४ ॥

निर्विशेषं परं ब्रह्म तच्च ज्ञानैकगोचरः ।
इत्येवमर्थकं भाष्यं व्यासेनाप्यनुमोदितम् ॥ ४५ ॥

ब्रह्मणः सविशेषत्वं तस्य वा कर्मशेषताम् ।
कदाचित्स्थापयेत्कर्मवासनावासितो ह्यसौ ॥ ४६॥

तदा महाननर्थः स्याद्व्याचष्टां तत्सनन्दनः ।
ब्रह्मचर्यात्स हि प्राप्तसंन्यासो ब्रह्मणि स्थितः ॥ ४७ ॥

भगवद्वदनाम्भोजात्त्रिर्भाष्यार्थामृतं पपौ ।
व्याचष्टां वाऽऽनन्दगिरिः प्रथितस्तोटकाख्यया ॥ ४८ ॥

शेषे प्रमाणमाचार्य इत्युक्त्वाऽमी व्यरंसिषुः ।
अथाचार्यः समाहूय सुरेशाचार्यमब्रवीत् ॥ ४९ ॥

व्याख्याने भवदीयेऽमी शङ्कन्ते कर्म्यसाविति ।
तत्त्वया वार्तिकं कार्यं बृहदारण्यकस्य तु ॥ ५० ॥

जानाम्यहं तव मतं निष्कले ब्रह्मणि स्थितम् ।
किं तु न प्रतियन्त्येते वार्तिके स्फुटयाशयम् ॥ ५१ ॥

इत्याज्ञया गुरोरेष विरराम मनोरथात् ।
चिरप्रेप्सितमप्यर्थं जह्युर्गुर्वर्थमुत्तमाः ॥ ५२ ॥

बृहदारण्यकस्याथ गुरुशासनशेखरः ।
वार्त्तिकं चाथ नैष्कर्म्यसिद्धिं च विदधे सुधीः ॥ ५३ ॥

उभयं चातिगम्भीरं विस्पष्टार्थं च देशिकः ।
समीक्ष्य सम्यक् शिष्यांश्च भावयित्वेदमब्रवीत् ॥ ५४ ॥

कात्स्न्र्येन वार्तिकमिदं भाष्यसंवादि सुस्फुटम् ।
नैष्कर्म्यसिद्धिस्त्वद्वैतसिद्धान्तमकुटीमणिः ॥ ५५ ॥

यावती व्याख्यया कीर्तिस्तावती चाधिका च ते ।
इति प्रशंसनीयं तं प्रशशंस महागुरुः ॥ ५६ ॥

अन्येष्वपि प्रतीतेषु तैत्तिरीयकवार्तिकम् ।
प्रणीय भगवत्पादपादाब्जे स समार्पिपत् ॥ ५७ ॥

पद्मपादः सूत्रभाष्यटीकां वै पद्मपादिकम् ।
वृत्तिं चोत्तरभागस्य गुर्वादेशेन निर्ममे ॥ ५८ ॥

आनन्दगिरिमुख्यास्तु भाष्यव्याख्यानमाज्ञया ।
अन्यांश्चिबन्धनग्रन्थानपि कृत्वा न्यवेदयन् ॥ ५९ ॥

तद्ग्रन्थजातं भाष्यानुकारीत्यभ्युपगम्य सः ।
सुरेश्वराचार्यवर्जं सर्वैः शिष्यगणैर्वृतः ॥ ६० ॥

जगाम वेंकटगिरिं श्रीनिवासं निषेवकः ।
शेषप्रीत्यै वसन् यत्र भूवैकुण्ठ व्यभाद्धरिः ॥ ६१ ॥

कृताभिषेकस्तत्र श्रीपुष्करिण्यां गुरूत्तमः ।
नत्वा तुष्टाव वाग्गुम्फैः श्रीनिवासं सह श्रिया ॥ ६२ ॥

तत्र वैखानसान् प्राप्तांस्तान्त्रिकान् वैदिकान् व्यधात् ।
ततः कश्चिद्द्विजवरो वैराग्यादिगुणान्वितः ॥ ६३ ॥

श्वित्रेण सर्वाङ्गीणेन कूश्माण्डसदृशाकृतिः ।
हृणीयमानः सद्सि प्राक्तनं स्वमघं स्मरन् ॥ ६४ ॥

पर्यश्रुनयनः प्राह प्रणमन् गुरुपादयोः ।
मादृशामघिनां ब्रह्मन्नन्धे तमसि मज्जताम् ॥ ६५ ॥

तरणिस्त्वं निसृष्टोऽसि पाहि मां करुणानिधे ।
इति शोचन्तमाश्वास्य चाक्षुष्या [1]दीक्षया गुरुः ॥ ६६ ॥

अनुगृह्याबभाषे तं महात्मन् सौम्य मा शुचः ।
न त्वं देहो न च प्राणो नेन्द्रियं न मनो न धीः ॥ ६७ ॥

स्वयंज्योतिस्त्वमात्मासि शरीराद्यवभासकः ।
कथमस्मि स्वयं ज्योतिः कथमस्म्यवभासकः ॥ ६८ ॥

इति पृच्छन्तमेकेन श्लोकेन प्रत्यबोधयत् ।

॥ एकश्लोकी ॥

"किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।

---

[1] यथा मत्स्यः स्वापत्यानि चक्षुषैवाप्याययति, तथा प्रपन्नस्य चक्षुषैवानुग्रहश्चाक्षुषी दीक्षा ।

चक्षुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने
किं तत्राहमतो भवान् परमं ज्योतिस्तदस्मिन् प्रभो ॥"

इति प्रबोधितस्तत्त्वं गुरुणा करुणाब्धिना ।
देहाभिमानजं दुःखं विमुच्य मुदमाप सः ॥ ६९ ॥

ततः काञ्चीपुरीं पृथ्वीकान्ताकाञ्चीमुपाययौ ।
सप्तस्वेकतमामाहुर्बुधा मोक्षपुरीषु याम् ॥ ७० ॥

"अयोध्या मथुरा माया काशी काञ्चिरवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥ ७१ ॥"

कामाक्षीति परा शक्तिः सांख्यायनमहामुनेः ।
तपसा स्वयमुद्भूता यत्रैकाम्रेश्वरप्रिया ॥ ७२ ॥

कटाक्षपूरविप्रुड्भिर्जीवत्रर्गांश्चतुर्विधान् ।
यथार्हमनुगृह्णाति चतुर्वर्गफलोदयैः ॥ ७३ ॥

यस्यां वरदराजाख्यः सांनिध्यं कुरुते हरिः ।
पूजां यज्ञपतिर्गृह्णन् यजमानस्य वेधसः ॥ ७४ ॥

तत्रागतो गुरुर्विष्णुं शंकरं शंकरीमपि ।
स्नात्वा कम्पासरस्तीर्थे स्तुत्वा तत्रत्यभूभृता ॥ ७५ ॥

राजसेनेन सुमहत्पृथग्देवालयत्रयम् ।
प्राकारगोपुराद्याढ्यं दिव्यगर्भगृहोज्ज्वलम् ॥ ७६ ॥

अर्धमण्टपसंशोभि मणिमण्टपमण्डितम् ।
कारयामास सर्वज्ञः सर्वलक्षणलक्षितम् ॥ ७७ ॥

तथा पूजोत्सवादींश्च तत्र तत्र प्रवर्तयन् ।
भक्तिं प्रवर्धयामास जनानामधिकाधिकम् ॥ ७८ ॥

श्रीचक्रं स्थापयामास श्रीकामाक्ष्याः पुरो गुरुः ।
मठं च स्थापयामास तत्र विद्याभिवृद्धये ॥ ७९ ॥

---

श्रीचक्रलक्षणं तु—

चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः ॥ इति ॥

तत्र चत्वारि शिवचक्राणि

बिन्दुश्चाष्टदलं पद्मं तथा षोडशपत्रकम् ।
चतुरश्रं चतुर्द्वारं शिवचक्राण्यनुक्रमात् ॥' इति ॥

तथा पञ्चशक्तिचक्राणि—

"त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥" इति ।

ततश्च—

"बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥" इति श्रीचक्रनिष्पत्तिः ।

तत्र च—

"त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।
दशारयोः षोडशारं भूगृहे भुवनाश्रकम् ॥ १ ॥

अत्रान्तरे ताम्रपर्णीतीरादभ्यागतान् द्विजान् ।
भेदवादपरान्न्यायैः कुर्वन्नद्वैततत्परान् ॥ ८० ॥

[1]ततश्चिदम्बरं प्राप हृन्मध्यं यद्विदुर्बुधाः ।
यत्र श्रीशिवकामाम्बादयितो नटनच्छलात् ॥ ८१ ॥

मग्नान् संसृतिदुःखाब्धौ समुद्धृत्य चराचरान् ।
आनन्दयत्यपि जडान्नटराजः कृपानिधिः ॥ ८२ ॥

यत्कृपाम्बुलेशेन जात्या नीचोऽपि भक्तिमान् ।
स्वैः पदमगान्नन्दो योगीन्द्रैरपि दुर्लभम ॥ ८३ ॥

आदित्योपासकांस्तत्र विप्रान् द्रष्टुमुपागतान् ।
महौकतानधिषणान् कृत्वा मध्यार्जुनं गतः ॥ ८४ ॥

---

शैवानामपि शाक्तानां चक्राणां च परस्परम् ।
अविनाभावसंबन्धं यो जानाति स चक्रवित् ॥ २ ॥
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः सदाशिवः ।
अविनाभावसंबन्धस्तस्माद्बिन्दुत्रिकोणयोः ॥ ३ ॥
एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ।
न तत्फलमवाप्नोति ललिता वा न तुष्यति ॥ ४ ॥'' इति ॥

1 ''श्रीपर्वत शिरःस्थाने केदारं तु ललाटके ।
कुरुक्षेत्रं कुचस्थाने प्रयागं हृत्सरोरुहे ॥
चिदम्बरं तु हृन्मध्ये आधारे कमलालयम् ।
इति दर्शनोपनिषदि चतुर्थखण्डे ।

स्नात्वा कवेरकन्यायां महालिङ्गं स्तुवन् गुरुः ।
शृण्वतां सर्वलोकानामातस्थे शिवसंनिधौ ॥ ८५ ॥

सर्वोपनिषदर्थोऽसि सर्वज्ञोऽसि महेश्वर ।
श्रुतेस्तात्पर्यमद्वैत इति मे निश्चिता मतिः ॥ ८६ ॥

बहूनामत्र संदेहः कुरु तस्य विनिर्णयम् ।
आविर्भूतो महालिङ्गाद्देहरत्नाकृतत्वरः ॥ ८७ ॥

दक्षिणं बाहुमुद्यम्य जगर्ज परमेश्वरः ।
सत्यमद्वैतमद्वैतं सत्यं सत्यं त्वया कृतम् ॥ ८८ ॥

भूतार्थवादी त्वद्भाष्यं नात्र कार्या विचारणा ।
इत्युक्त्वाऽन्तर्हितः शम्भुस्ततस्तान् शरणागतान् ॥ ८९ ॥

यथाधिकारमाचार्यः सर्वाननुशशास हि ।

## ॥ सोपानपञ्चकम् ॥

"वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां
तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् ।
पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयता-
मात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिष्क्रम्यताम् ॥ १ ॥

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढाधीयतां
शान्त्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् ।

सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुके सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरो वाक्यं समाकर्ण्यताम् ॥ २ ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां
दुस्तर्कात्तु विरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम् ।
ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥

क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां
स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यता-
मौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४ ॥

एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां
प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥

इत्येवमनुशिष्टास्ते नित्यकर्मपरायणाः ॥ १० ॥

पञ्चयज्ञपरा नित्यं देवतातिथिपूजकाः ।
वेदमार्गैकनिरता जाताः सर्वे मुमुक्षवः ॥ ११ ॥

श्रीमत्परमहंसेन्द्रभगवत्पादपादयोः ।
अद्वैतभावना ब्रह्मण्यप्येषां समभूत्तमम् ॥ १२ ॥

मार्गेऽवतार्य तानेवं ततो रामेश्वरं ययौ ।
संभेदं गच्छतो यत्र रत्नाकरमहोदधी ॥ ९३ ॥

अन्वर्थयन् यदृश्मानः प्राप्लवन्त इति श्रुतिम् ।
सेतुर्विराजते कीर्तिकेतुः पौलस्त्यघातिनः ॥

धूमकेतुर्महाघौघतूलानां श्रीनिकेतनम् ।
सीमन्त इति यं क्षोणीसीमन्तिन्या विदुर्बुधाः ॥ ९५ ॥

तत्र स्नात्वा रामसेतौ गुरुराजो यथाविधि ।
देव्या पर्वतवर्धिन्या रामनाथमपूजयत् ॥ ९६ ॥

तत्र शैवापदेशेन षड्विधा व्रतिनः स्थिताः ।
शैवरौद्रोग्रभक्ताख्या जङ्गमास्तदनन्तरम् ॥ ९७ ॥

षष्ठः पाशुपतो ज्ञेयः षडेते वेददूषकाः ।
प्रत्यवस्थातुमायातांस्ताननायासतो गुरुः ॥ ९८ ॥

विनीय त्याजिताशेषतत्तल्लिङ्गान् विधाय सः ।
प्रवर्तयन् वेदमार्गे ततोऽनन्तपुरं ययौ ॥ ९९ ॥

तत्र भास्करतीर्थेऽब्धौ कृतस्नानादिनैत्यिकः ।
भगवन्तं वासुदेवं सान्द्रधाराधरद्युतिम् ॥ १०० ॥

शेषमूर्धमणिव्रातघृणिरञ्जितविग्रहम् ।
उदयाद्रिमिव प्रोद्यद्दिवाकरकराञ्चितम् ॥ १०१ ॥

शयानमपि लोकानां जाग्रतं शिवतातये ।
प्रसादसुमुखं देवं तुष्टाव विविधैः स्तवैः ॥ १०२ ॥

शैववद्वैष्णवास्तत्र बहुविधाः परिकीर्तिताः ।
भक्ता भागवताश्चैव वैष्णवाः पाञ्चरात्रिणः ॥ १०३ ॥

वैखानसाः कर्महीना इति तानभ्युपागतान् ।
"ब्राह्मणानां च गायत्र्याः संवादोऽभून्महान् पुरा ॥

अतस्तया हि ते शप्ताः पाषण्डा भवतेति च ।
वेदोक्तकर्महीनाश्च तान्त्रिकाचारतत्पराः ॥ १०५ ॥

यूयं कलौ भवन्त्वेवमिति तानाह सा रुषा ।
अतः कलियुगे प्राप्ते भविष्यन्ति द्विजाधमाः ॥ १०६ ॥

शङ्खचक्राङ्किताकारा ऊर्ध्वपुण्ड्रललाटकाः ।
इत्यादिव्यासदक्षादिस्मृत्यर्थं दर्शयन् गुरुः ॥ १०७ ॥

तांस्त्यक्तवावैदिकाचारान् शिष्टाचाररतान् व्यधात् ।
ततो गोकर्णमासाद्य कोटितीर्थे कृताह्निकः ॥ १०८ ॥

महाबलेश्वरं देवं भद्रकर्ण्यम्बया सह ।
स्तुत्वा मूकाम्बिकाक्षेत्रं गच्छन् देव्याः स संनिधौ ॥

अङ्के कृत्वा मृतं बालं रुदतीं ब्राह्मणीं गुरुः ।
निशाम्य करुणापूर्णः प्रतिजज्ञेऽम्बिकापुरः ॥ ११० ॥

यद्यस्ति ब्रह्मचर्यं मेऽप्यखण्डितमविप्लुतम् ।
ब्रह्मण्येव च मे निष्ठा तर्हि जीवत्वयं शिशुः ॥ १११ ॥

इत्थं परमहंसेन्द्रपरिव्राजकपार्थिवे ।
अम्बिकासंनिधावुच्चैर्हस्तमुद्यम्य गर्जति ॥ ११२ ॥

सुप्तोत्थितवदुत्तस्थौ स बालः पश्यतां नृणाम् ।
तेन चित्रीयमाणायां जनतायां मुनीश्वरः ॥ ११३ ॥

सुब्रह्मण्यप्रियावासं सुब्रह्मण्यस्थलं ययौ ।
नद्यां कुमारधारायां तत्र स्नात्वा गुरूत्तमः ॥ ११४ ॥

कुमाराद्रिं समारुह्य षण्मुखं तारकान्तकम् ।
शरण्यं सर्वलोकानां देवतानां परायणम् ॥

स्तुत्वा शिष्यैः समं तत्र श्रुत्यर्थं बोधयन् स्थितः ।
हैरण्यगर्भास्तत्रैके सौगताश्च तथाऽपरे ॥ ११६ ॥

तत्रायातान् वैदिकांश्चैके वीतद्वेषान् श्रुतौ परान् ।
अन्यांश्च शाक्तगाणेशभैरवादींस्ततस्ततः ॥ ११७ ॥

प्राप्तांस्तत्तन्मते दोषं दर्शयित्वा जिगाय तान् ।
अत्रान्तरे पद्मपादस्तीर्थयात्राप्रसक्तः ॥ ११८ ॥

स्वमातुलगृहं गत्वा स्वग्रन्थांस्तत्र निक्षिपन् ।
समाप्ततीर्थयात्रः सन् यावदावर्तते पुनः ॥ ११९ ॥

तावद्व्याजेन तद्ग्रन्थकोशो दग्धो दुरात्मना ।
स नष्टकोशसर्वस्वो नष्टकोश इव प्रभुः ॥ १२० ॥

दुःखितः पुनरेत्यैतदाचार्याय न्यवेदयत् ।
स च प्रत्याह भगवान्मा भैषीस्त्वं मनन्दन ॥ १२१ ॥

कोशो दग्धो न ते ग्रन्थः स मे मनसि वर्तते ।
तां तथैव स्मराम्यद्य यथोक्ता पञ्चपादिका ॥ १२२ ॥

स हि मुख्यतमो ग्रन्थस्त्वद्ग्रन्थेषु स जीवति ।
इत्याभाष्य स तद्ग्रन्थं तथैव पुनरूचिवान् ॥ १२३ ॥

तेन प्रणष्टलाभेन पद्मपादः प्रहृष्टवान् ।

इत्यन्योन्यं विमतविमतोत्प्रेक्षकैर्वादिवृन्दै-
रन्धीभूते जगति तु गजप्रेक्षकान्धाविशेषैः ।
श्रुत्या युक्त्या महदनुभवैर्ध्वस्तभेदान्धकारो
गोभिर्भास्वानिव विशदयामास तत्त्वं यतीन्द्रः ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
श्रीभगवत्पादाभ्युदये दिग्विजयवर्णनं नाम
अष्टमः सर्गः ॥



## नवमः सर्गः ॥

एवं वेदविरुद्धानि विरुद्धानीतरेतरम् ।
विरुद्धानि सति श्रोदे निजाभ्युपगमैरपि ॥ १ ॥

अवैदिकानि तान्येष मतानि द्वैतवादिनाम् ।
धर्मशास्त्ररथारूढो वेदखड्गधरो विभुः ॥ २ ॥

यथा श्वापदयूथानि लीलयाऽऽखेटयेन्नृपः ।
तथा विद्राव्य विज्ञानचक्रवर्ती यतीश्वरः ॥ ३ ॥

जगन्निरीतिकं चक्रे शंकरः शंकरेहितः ।
निर्विशेषं परं तत्त्वं गोचरीकर्तुमक्षमाः ॥ ४ ॥

ये भक्तिमन्तः श्रद्धाढ्या मन्दास्तेष्वनुकम्पया ।
षण्मतस्थापनं कृत्वा सर्वानन्वग्रहीद्विभुः ॥ ५ ॥

शिवविष्ण्वम्बिकाभानुगणाधिपकपालिषु ।
यत्र यस्य भवेत्प्रीतिर्देवतायामुपासितुम् ॥ ६ ॥

स देवतां तां भजतां श्रद्धाभक्तिपुरःसरम् ।
श्रुतिप्रसिद्धाः षडिमा देवताः कामितप्रदाः ॥ ७ ॥

फलाभिसन्धिमुच्छिद्य भजतां मोक्षदाश्च ताः ।
श्रुतिस्मृतिसदाचारविरुद्धान्यत्र यानि वा ॥ ८ ॥

लिङ्गचक्राङ्कमांसासृगुच्छिष्टास्थिमुखानि तु ।
वर्जनीयान्यवद्यानि तानि तन्त्रोदितान्यपि ॥ ९ ॥

तानि पाषण्डमोहार्थमूचुर्हरिहरादयः ।
श्रुतिघण्ठापथे मोक्षमाभिनिष्क्रामति स्थिते ॥ १० ॥

किमर्थं वाऽतिदुर्गेण चञ्चूर्यध्वे कदध्वना ।
अनुशिष्टाः षडप्येवं भजन्तः स्वेष्टदेवताम् ॥ ११ ॥

तमेव परमाचार्यममन्यन्त पृथक् पृथक् ।
ततः श्रीशंकराचार्यो जगद्गुरुरितीर्यते ॥ १२ ॥

भूचक्रवाले संस्थाप्य श्रौतमद्वैतदर्शनम् ।
रक्षार्थं प्रचयार्थं च तस्य योगी व्यचिन्तयत् ॥ १३ ॥

अथ निष्कण्टकीभूता समुद्भूतेन सर्वतः ।
तत्त्वज्ञानेन वसुधा सस्येनेव विराजते ॥ १४ ॥

एतावता न मन्येऽहमात्मनः कृतकृत्यताम् ।
गते तु मयि सर्वं च पुनरप्याकुली भवेत् ॥ १५ ॥

तस्माद्विद्यामठानन्यानपि काष्ठासु कारयन् ।
विद्याप्रवचनं शिष्यैरास्माकैस्तत्र तत्र च ॥ १६ ॥

प्रयोज्यास्तत्संप्रदायमविच्छिन्नं च कुर्महे ।
पारंपर्यागते सम्यगुपदेशक्रमे सति ॥ १७ ॥

न विच्छिद्येत सद्धर्म इति कृत्वा मतिं गुरुः ।
जगन्नाथं पूर्वसिन्धुतरङ्गालिङ्गितं ययौ ॥ १८ ॥

सांनिध्यं कुरुते नित्यमत्र श्रीपुरुषोत्तमः ।
इति क्षेत्रं तदप्याहुः पुरुषोत्तमसंज्ञया ॥ १९ ॥

तत्राम्बोधौ कृतस्नानो जगन्नाथेश्वरं हरिम् ।
तुष्टाव करुणासिन्धुं निमग्नः संमदाम्बुधौ ॥ २० ॥

तदालयोपकण्ठे दिश्यैन्द्र्यामिन्द्रगृहोपमम् ।
मठं गोवर्धनं नाम कृत्वर्ग्वेदप्रधानकम् ॥ २१ ॥

पद्मपादं नियम्यात्र व्याख्यासिंहासनेश्वरम् ।
द्वाभ्यां च हस्तामलकतोटकाभ्यां समन्वितः ॥ २२ ॥

प्रत्यक्सागरकल्लोलवेल्लितां द्वारकामगात् ।
मध्येपदव्युज्जयिन्यां महाकालेश्वरं हरम् ॥ २३ ॥

महाचण्डीं भगवतीं स्तुत्वा स्कन्दं च भक्तितः ।
द्वारकां रुक्मिणीकान्तविहारमहितामगात् ॥ २४ ॥

कालिकाख्यं मठं तत्र सामवेदप्रधानकम् ।
निर्माय गोमतीतीर्थे श्रीसिद्धेश्वरसंनिधौ ॥ २५ ॥

निधाय हस्तामलकं तत्र व्याख्यानदेशिकम् ।
तोटकेनाप मधुरामरिष्टगृहमीशितुः ॥ २६ ॥

तत्र श्रीबालकृष्णस्य बाललीलाचितेषु यत् ।
एकान्तसाक्षी तत्साक्षात्कर्तुं गोकुलमाययौ ॥ २७ ॥

वृन्दावनं बालकृष्णपादधूलीपवित्रितम् ।
दर्शंदर्शं कुतुकितस्तत्तल्लीलागतस्मृतिः ॥ २८ ॥

कुरुक्षेत्रं ततः प्राप कुरुपाण्डवसेनयोः ।
यत्रासीत्सुमहद्युद्धं सर्वलोकक्षयावहम् ॥ २९ ॥

स्मृत्वा स्मृत्वा तन्निधनं घोरं प्रलयसंनिभम् ।
कृपया विमनीभावं मनागपि महामनाः ॥ ३० ॥

ततो जगाम बदरीं भाष्यप्रणयनस्थलीम् ।
नद्यामलकनन्दायां निर्वर्तितनिजक्रियः ॥ ३१ ॥

तपस्यन्तावृषी तत्र नरनारायणौ स्तुवन् ।
श्रीमठं नाम निर्माय तत्राथर्वणमुख्यकम् ॥ ३२ ॥

विदधे तोटकाचार्यं व्याख्यातारं जगद्गुरुः ।
दत्तात्रेयोऽथ भगवान् द्रष्टुमभ्यागतो गुरुम् ॥ ३३ ॥

सभाजितस्तेन सम्यक्शृण्वंस्तद्भाष्यमान्ततः ।
सश्लाघमाह कुतुकी भोः शंकर जगद्गुरो ॥ ३४ ॥

इयं श्रुत्यन्तमञ्जूषासमुद्घाटनकुञ्चिका ।
रत्नजातमिदं सूत्रग्रथितं कण्ठभूषणम् ॥ ३५ ॥

इयं हि नौर्निमग्नानामपारे भवसागरे ।
अयं हि चण्डमार्तण्डो गाढे तमसि ताम्यताम् ॥ ३६ ॥

इदं भाष्यमिदं भाष्यं भूषितानेन भारती ।
इत्यानन्दाम्बुपूर्णाक्षः स्तुत्वा मुनिवरो ययौ ॥ ३७ ॥

तदन्तरे सुमहती किंवदन्ती समुत्थिता ।
काश्मीरे शारदादेव्याश्चतुर्द्वारं महागृहम् ॥ ३८ ॥

प्रतिद्वारं च निहिता बहवो मतवादिनः ।
जित्वैव तांस्तत्कवाटमुद्धाट्यान्तर्महागृहम् ॥ ३९ ॥

सर्वज्ञपीठमास्थेयमित्येवं नियमे स्थिते ।
पाश्चात्या औत्तराहाश्च पौरस्त्याश्च विपश्चितः ॥ ४० ॥

तत्तत्कवाटमुद्धाट्य संप्रविष्टा यथाश्रवम् ।
दक्षिणद्वारमद्यापि नोद्धाटितमिवैक्ष्यत ॥ ४१ ॥

कवाटोद्धाटने दक्षो दाक्षिणात्येषु नास्ति वा ।
इत्याकर्ण्य यतीन्द्रस्तु सपद्याकाशवर्त्मना ॥ ४२ ॥

तच्छारदागृहं प्राप्य सहसाऽऽरोढुमुद्यतः ।
सांख्यपातञ्जलौ तत्र काणादन्यायकोविदौ ॥ ४३ ॥

उभौ मीमांसकौ तद्वदार्हतः सौगता अपि ।
अन्ये च चोदयामासुः सर्वेऽप्येकैकशो गुरुम् ॥ ४४ ॥

जिगाय नयैः श्लक्ष्णैस्ते च तूष्णीकतामगुः ।
ततः कवाटमुद्घाट्य द्वारपालैः प्रवेशितः ॥ ४५ ॥

शारदामन्दिरं दिव्यं शारदेशगृहोपमम् ।
जाम्बूनदमयं तत्र नानारत्नविचित्रितम् ॥ ४६ ॥

पीठमारोपयामासुस्तदध्यक्षा जगद्गुरुम् ।
तमासीनं सहस्रांशुप्रतिमाने वरासने ॥ ४७ ॥

भानुमण्डलमध्यस्थं मेनिरे पुरुषं परम् ।
अथ मूर्तिमती देवी शारदा तमभाषत ॥ ४८ ॥

सर्वज्ञस्त्वं महाप्राज्ञ प्रागेवासि परीक्षितः ।
न ते समोऽस्ति विद्यायां बुद्धौ वा धिषणोपमम् ॥ ४९ ॥

अज्ञानसागरे मग्ना विद्या पृथ्वीव सागरे ।
क्रोडात्मनेव हरिणा त्वया सा क्रीडयोद्धृता ॥ ५० ॥

भेदवादिगणो भग्नो हिरण्याक्ष इवाहवे ।
त्वया रत्नेन विदुषां रत्नगर्भाऽद्य रत्नसूः ॥ ५१ ॥

जगत्सनाथं नाथेन मृत्योर्मोचयता त्वया ।
नारायण श्रीमन् कीर्तिमाप्नुहि शाश्वतीम् ॥ ५२ ॥

इति सर्वज्ञतां तस्य सा प्रख्याप्य तिरोदधे ।
कृतकर्तव्यशेषोऽथ हिमवत्सानुनि स्थितम् ॥ ५३ ॥

केदारक्षेत्रमासाद्य केदारेश्वरमर्चयन् ।
जनैरभ्यर्थितः शैत्यबाधया स्नातुमक्षमैः ॥ ५४ ॥

स्नानसौकर्यकृन्नृणां तुष्टाव स महेश्वरम् ।
ततः सुस्राव सलिलमुष्णं गङ्गाधराङ्कितः ॥ ५५ ॥

अद्यापि स्रवते हन्त तत्रोष्णं वारि लिङ्गतः ।
अथ गोविन्दभगवत्पादाचार्यगुरुः स्वयम् ॥ ५६ ॥

अन्तेवासी व्याससूनोर्गौडपादो महामुनिः ।
प्रशिष्यं शंकराचार्यं द्रष्टुकामः समाययौ ॥ ५७ ॥

आचार्यस्य तमाचार्यं वन्द्यं भुवनवन्दितैः ।
प्रणम्योवाच भगवन् शिष्यशिष्योऽस्मि शंकरः ॥ ५८ ॥

गभीरोदारचरितं तममानुषवैभवम् ।
जगद्धितैकव्यापारमसङ्गं निर्व्यपाश्रयम् ॥ ५९ ॥

प्रश्रितं प्राह भगवान् गौडपादो महागुरुः ।
भौमसेतुः कृतोऽम्भोधौ रामेण कपिसाह्यतः ॥ ६० ॥

एकाकिना त्वया धर्मसेतुः क्लृप्तो भवाम्बुधौ ।
चारितार्थ्यं तु तस्यासीदुत्तीर्णे सागरेऽस्य तु ॥ ६१ ॥

अर्थवत्त्वं मुमुक्षूणां भवत्याभूतसंप्लवम् ।
सूत्राणि प्रणिनायास्मत्प्राचार्यो बादरायणः ॥ ६२ ॥

मया प्रणीता माण्डूक्यकारिका प्रखितात्मना ।
सूत्राणि कारिकाश्चेति द्वयमद्वैतदर्शनम् ॥ ६३ ॥

प्रसह्य द्वैतिभिः स्वैरं रक्षितं मृतकोपमम् ।
दिष्ट्येदानीं त्वया धीमन् भाष्येणोज्जीवितं पुनः ॥ ६४ ॥

जननं ते सुजननं जीवितं ते सुजीवितम् ।
त्वदन्यो नास्ति जगति महार्थैकान्तजीवितः ॥ ६५ ॥

यावत्तिष्ठति धात्रीयं चतुःसागरमेखला ।
यावत्तिष्ठति खे ज्योतिश्चक्रं सेन्द्वर्कतारकम् ॥ ६६ ॥

तावत्कीर्तिरियं तात तव स्थास्यति शाश्वती ।
इति प्रेम्णा तमालिङ्ग्य गौडपादो महागुरुः ॥ ६७ ॥

जगद्गुरो चिरं जीया इत्याशास्य तिरोदधे ।
अथ श्रीशंकराचार्यः केदारेश्वरसंनिधौ ॥ ६८ ॥

वसन्निःशेषितं मेने स्वावतारप्रयोजनम् ।
ततो दुन्दुभिनिर्घोषः शुश्रुवे घोषयन् दिशः ॥ ६९ ॥

ददृशे च सपद्येव रजताचलसंनिभः ।
क्षीराम्बुराशिडिण्डीरसंघात इव मूर्तिमान् ॥ ७० ॥

महाहनुर्महाग्रीवो महोच्छ्रायो महातनुः ।
देवर्षिसिद्धगन्धर्वैस्तुवद्भिः परिवारितः ॥ ७१ ॥

ग्रैवेयकादिभिर्दिव्यैर्भूषणौघैः सुभूषितः ।
ककुदा च विषाणाभ्यां त्रिकूटाचलसंनिभः ॥ ७२ ॥

औपवाह्यो महेशस्य श्रीवृषो नन्दिना सह ।
ततस्ते सत्यसंकल्पं देवा लब्धमनोरथाः ॥ ७३ ॥

भूतार्थवादिभिः स्तोत्रैस्तुष्टुवुः श्रीजगद्गुरुम् ।
जय श्रीशंकराचार्य शर्वात्मन् सर्वशंकर ॥ ७४ ॥

शिवयोगितपःपाक श्रीसतीशुक्तिमौक्तिक ।
कालटीक्षेत्र निक्षेप लीलामानुषविग्रह ॥ ७५ ॥

कल्याणदायिन् कल्याण कल्याणाभिजनप्रिय ।
स्तवप्रीणितलक्ष्मीक श्रितदौर्गत्यनाशन ॥ ७६ ॥

सर्वज्ञ सर्वशास्त्रज्ञ सर्वतन्त्रज्ञ मान्त्रिक ।
कलाज्ञ कामतन्त्रज्ञ निष्कामाखिलकामद ॥ ७७ ॥

आपगाकर्षणपटो वटो कुम्भजलालित ।
मातृवाक्यैकनिरत ग्राहशापविमोचन ॥ ७८ ॥

वर्षाष्टकात्तसंन्यास निर्धूतभवबन्धन ।
नर्मदातीरसंचारिन् निर्जितारातिषड्गण ॥ ७९ ॥

गुरूपसदनाभिज्ञ गुरुपादप्रसादक ।
गोविन्दभगवत्पादपूज्यशिष्यागमान्तग ॥ ८० ॥

गुरुशुश्रूषणैकान्त संप्रदायविचक्षण ।
महोघहारिन्नार्तिघ्न गुरूश्लाघितवैभव ॥ ८१ ॥

गुर्वाज्ञापालनव्यग्र श्रीमद्वाराणसीप्रिय ।
साक्षात्कृतश्रीविश्वेश विश्वनाथानुमोदित ॥ ८२ ॥

मनीषापञ्चककवे मनीषिगणपूजित ।
बहुशिष्यपरीवार पद्मपादप्रियंकर ॥ ८३ ॥

हस्तामलकतत्त्वज्ञ तोटकारहितान्तर ।
बदरीवासकुतुकिन् भाष्यषोडशकेश्वर ॥ ८४ ॥

षोडशाब्दोज्ज्वलद्भाष्य निर्ज्ञाताखिलभाष्यक ।
श्रीवेदव्याससंवादिन् वेदव्यासानुमोदित ॥ ८५ ॥

भट्टपादगुरो वादजितमण्डनपण्डित ।
सुरेश्वरगुरो लक्ष्मीनृसिंहप्रीणनक्षम ॥ ८६ ॥

लक्ष्मीनृहरिशान्तार्ते परितोषितशारद ।
शारदादत्तसार्वज्ञ स्ववशीकृतशारद ॥ ८७ ॥

शारदामठनिर्मातः शारदाराधनोत्सुक ।
तुङ्गभद्रातटोल्लासिन् श्रीशृङ्गगिरिवल्लभ ॥ ८८ ॥

चन्द्रमौलीशपूजोत्क रत्नगर्भेश्वरार्चक ।
आराधितश्रीशैलेश श्रीनिवासनिषेवक ॥ ८९ ॥

श्रीचक्रस्थापक श्रीमन् श्रीकाञ्चीपुरकारक ।
श्रीकाञ्चीवासरसिक स्तुतदभ्रसभापते ॥ ९० ॥

महालिङ्गोद्घुष्टभाष्यगाम्भीर्यादिगुणावले ।
योगिन् परमहंसेन्द्र वादिमातङ्गकेसरिन् ॥ ९१ ॥

शाक्तमाथिन् सौरहारिन् सर्वतान्त्रिकतन्त्रभित् ।
तीर्थीकृतानेकतीर्थ नानादुर्मतखण्डन ॥ ९२ ॥

कापालिकमतध्वंसिन् बौद्धतूलकुलानल ।
निरस्तसांख्यकाणाद ध्वस्तमीमांसकाग्रह ॥ ९३ ॥

गोवर्धनमठाधीश प्रसीद पुरुषोत्तम ।
कालिकामठनिर्मातर्द्वारकान्तर्विहारक ॥ ९४ ॥

सेवितालकनन्दाक स्थापितश्रीमठोत्तम ।
विशुद्धाद्वैतसिद्धान्तिन् रक्षिताम्नायमस्तक ॥ ९५ ॥

दत्तात्रेयश्लाघितात्मन् गौडपादाभिनन्दित ।
सर्वज्ञारूढकाश्मीरशारदापीठ कीर्तिमन् ॥ ९६ ॥

षण्मतस्थापनाचार्य षाड्गुण्यपरिपूरित ।
उष्णाम्बुसर्गचतुर श्रीकेदारेश्वरप्रिय ॥ ९७ ॥

जगदीश जगद्वन्द्य जय सर्वजगद्गुरो ।
भगवन्नद्य नः कार्यं सत्यसंकल्प साधितम् ॥ ९८ ॥

जगत्यां स्थापितो धर्मो वेदवेदान्तगोचरः ।
निरस्तानि समस्तानि विमतानि मतानि हि ॥ ९९ ॥

अनाकुलतया लोकाः स्वस्वधर्मे प्रवर्तिताः ।
नियोजिताश्चार्चयितुं वेदैनैवेष्टदेवताः ॥ १०० ॥

उपर्युपरि विद्याभिवृद्ध्यर्थं स्थापिता मठाः ।
अशून्यो मध्यमो लोको भवतो यशसाऽधुना ॥ १०१ ॥

अशून्यं कुरु देवेश श्रीकैलासमहाचलम् ।
तथेति वृषमारुह्य कृतकृत्यो महेश्वरः ॥ १०२ ॥

जयघोषेण महता मुखरीकृतदिङ्मुखे ।
प्रेक्षमाणे सुरगणे सहस्रार्चिःसमद्युतिः ॥ १०३ ॥

स्वभासा भासयन् विद्युत्पुञ्जपिञ्जरया दिशः ।
परात्परतरं दिव्यं कैलासं प्राप शंकरः ॥ १०४ ॥

गीर्वाणाभ्यर्थनातः शिवगुरुगृहिणीशुक्तिमुक्ताफलं यः
संप्राप्ताशेषविद्यः कतिपयदिवसैर्दुग्धलक्ष्मीप्रसादः ।
अङ्काकृष्टप्रवाहो नृपतिकुलकरोऽपास्तगन्धर्वशाप-
स्तं पारिव्राज्यदीप्तं भुवनगुरुवरं शंकराचार्यमीडे ॥१०५॥

आप्तन्यासीकृताम्बो वरिवसितमहायोगिगोविन्दपाद-
स्तत्संक्रान्तात्मविद्यो निजकरकरकापीतरेवाप्रवाहः ।

यः श्रीकाशीनिवासप्रथितगुणगणः पद्मपादादिविद्व-
त्सेव्यस्तं विश्वनाथप्रसदनसदनं शंकराचार्यमीडे ॥१०६॥

गम्भीरोदारभाष्यप्रणयनमुदितव्यासविस्तारितायु-
र्वश्यश्रीमण्डनार्यो नरहरिकरुणापूरितः शारदेड्यः ।
आशासु ब्रह्मविद्याप्रवचननिगमश्रीमठस्थापको य-
स्तं दृप्यद्वादिमत्तद्विरदमृगपतिं शंकराचार्यमीडे ॥ १०६ ॥

काणादो येन काणः समजनि सुगतो दुर्गतोभूत्कपाले
भिन्नः कापालिकोऽभूत्कृतिरतिरकृती कापिलः क्वापि लिल्ये ।
शक्तोऽशक्तो विवासा विरहितवसतिर्भैरवो भीरवार्त
स्तं मिथ्यादृष्टिसर्वंकषमृतपरमं शंकराचार्यमीडे ॥ १०८ ॥

काष्ठाः सम्यक्प्रजाड्यातिमिरमपहृतं सुष्ठु मार्गाः प्रकाशा
नष्टा दुर्वादिघूका विलयमुपगता दर्शनाभासतारा: ।
अत्यन्ताम्भोजषण्डं विकचमभि रसं साधुभृङ्गाः पतन्ति
भ्राजन्ते राजहंसा उदयमुपगते शंकराचार्यसूर्ये ॥ १०९ ॥

नमस्ते महादेव देवेश शम्भो नमस्ते समस्तामरस्तोमवन्द्य ।
नमस्ते निरस्तस्वभक्ताखिलार्ते नमस्ते गुरो शंकराचार्यमूर्ते ॥
असद्धूमकेतो त्रयीधर्मकेतो नमः शंकराचार्य सद्धर्मसेतो ।
नमः पद्मबन्धो सदाचारबन्धो नमः शंकराचार्य कारुण्यसिन्धो ॥

नमः शान्तिदान्तिक्षमासत्यधाम्ने
नमः पापपुञ्जाद्रिदम्भोलिनाम्ने ।

नमस्ते स्वयंज्योतिरानन्दभूम्ने
नमः शंकराचार्यनाम्ने महिम्ने ॥ ११२ ॥

अपारे गभीरे भवाब्धौ निमग्नं
विनैकं गुरुं कः समुद्धर्तुमीष्टे ।
अतस्त्वां प्रपन्नस्य मे दीनबन्धो
विलम्बं विना देहि हस्तावलम्बम् ॥ ११३ ॥

पिता त्वं सुहृत्त्वं परा देवता त्वं
त्वमेवाखिलं नाथ नाथस्त्वमेव ।
भवन्नाथमेनं जनं वैतरण्यां
पतन्तं गुरो रक्ष रक्ष प्रसीद ॥ ११४ ॥

क ते वैभवं शारदाभावनीयं
क चायं जनोऽकिंचनः किंपचानः ।
प्रवृत्तस्य वक्तुं गुणांस्तावकान्मे
क्षमस्वापराधं नमस्ते नमस्ते ॥ ११५ ॥

जयति निगमशीर्षे पुष्पिता वाक्यमाला
जयति कुसुमगुम्फं गुम्फिता सूत्रमाला ।
जयति च मधुधारास्यन्दिनी भाष्यमाला
जयति च परमार्थाखण्डतात्पर्यमाला ॥ ११६ ॥

इति श्रीमहामहोपाध्यायमहाकवि लक्ष्मणसूरिप्रणीते
श्रीमगवत्पादाभ्युदये कैलासयात्रावर्णनं नाम
नवमः सर्गः ॥

# शुद्धपत्रिका

| पृष्ठं | पङ्क्ति | अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| 9 | 2 | निन्दत | विन्दतः | ... | 12 | ष्करुण | ष्कष्णा |
| 9 | 16 | प्सयसि | प्ससि | 73 | 12 | धूम्र | धूम |
| 10 | 15 | च्यवन्ती | च्यवन्ते | 78 | 11 | कोय | कौव |
| 11 | 14 | रिकंयत्स | रिकसत्यं यत् | 79 | 8 | सश | सद्य |
| 13 | 10 | श्वोच्छ्रि | श्वोच्छ्रि | 86 | 14 | यथा | तथा |
| 14 | 18 | सिलक्ष्म | क्षिलक्ष्म | 89 | 5 | जः | जह्नुः |
| 22 | 4 | भवती | भवति | ... | 15 | रज | राज |
| 30 | 4 | ताम्र | ताम्र | 93 | 17 | रूप | रूपं |
| 35 | 10 | भीरुणा | भीतया | 94 | 8 | थिणा | यिषया |
| 36 | 13 | विधिं | विवि | 96 | 4 | प्रणा | प्रणता |
| 43 | 11 | ब्रह्मण्यं | ब्राह्मण्यं | ... | 8 | वेदे | वेद |
| 51 | 4 | मणक | मणिक | 99 | 14 | भेद | भेक |
| ... | 14 | लवाप | लवाटोप | 110 | 13 | त्यक्त्वा | त्यक्ता |
| 52 | 9 | शेषं | सेशं | 113 | 15 | छिन्ना | च्छिद्य |
| 56 | 1 | रद्धा | रद्ध | 116 | 2 | साक्षी | साक्षि |
| 58 | 12 | त्यायितं | त्यापितं | 118 | 16 | नारायग | नारायण इव |
| 59 | 10 | व्यधीयत | न्यधीयत | ... | 10 | पमम | पमम् |
| ... | 15 | तदन्या | तदनन्या | 120 | 6 | महार्यै | महार्थै |
| 61 | 17 | परीक्षतां | परीक्षितं | 123 | 9 | सीदपु | सीदत्पु |
| 72 | 8 | नस्यजीवयं | नस्म्यधीतवान् | 125 | 11 | व्यालि | व्यास्ति |

